

श्रीमद्वैष्णवद्वैतसिद्धान्तप्रतिष्ठापनाचार्य-श्रीमन्मध्वाचार्यपीठा-
धिष्ठितानां श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यनेकगुण-
गणालंकृतानां श्रीमदुत्तरादिमठाधीशानां श्रीमद्वैदिक-
सनातनद्वैतसिद्धान्तप्रचारणबद्धपरिकराणां श्री-
श्री १०८ श्रीमत्सत्यध्यानतीर्थमुनींद्राणां
अंतेवासिना पण्डितशिरोमणि-
नृसिंहाचार्येण संपादितः—

# अद्वैतभ्रान्तिप्रकाशः।

२४

प्रकाशकः—
सेक्रेटरी श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारिणी सभा
काशी।

संवत् १९६०

॥ ॐ नमो भगवते वासुदेवाय ॥

# अद्वैतिभ्रांतिप्रकाशः ।



श्रियः कांतं कान्तागणितगुणरत्नैकनिलयं ।
सदा दुःखाविद्याद्यखिलविविधावद्यविकलम् ॥
सदोद्यत्सम्पूर्णप्रमतिहृदयाम्भोरुहजुषं ।
नृसिंहं ध्यायामोऽखिलकुमतकालानलदृशम् ॥
आनन्दतीर्थचरणं शरणं यामि यद्बलात् ।
अद्वैतिरसनाच्छेदकर्तरीवाग्विजृम्भते ॥

अन्येऽपि चार्वाकतथागतार्हतप्रभाकराक्षांघ्रिकणादकल्पिताः ।
कदागमाः सन्ति तथापि नो तथा यथायमद्वैतपथो वृथोदयः ॥

श्रुतिस्मृत्यक्षादिप्रमितिविषयोऽर्थः किल मृषा
नमेयं यन्मानैरपि सकलसामर्थ्यविकलम् ।
तदस्माकं तत्त्वं त्विति नु तव वाचस्पति नु —
र्विषाणं तत्त्वं गोर्न तदिति किलोन्मत्तभणितिः ॥

सर्वैरपि वादिभिर्मानाधीनामेयसिद्धिरित्यङ्गीकृतं अतस्तेषां स्वस्वसिद्धान्तेषु प्रामाणिकत्वाभिमानो युज्यते । यत्तु प्रामाणिकं= श्रुतिस्मृतीतिहासपुराणादिषु सप्रपंचं वर्णितं अर्थक्रियासमर्थ-मनन्तानवद्यकल्याणगुणबृंहितं जगज्जन्मादिकर्तृपरमात्मस्वरूपं । तथा बहुवित्तव्ययायासादिसाधनसंपाद्यराजसूयादिनानाविधया-गसाध्यधर्मस्वर्गापवर्गादिफलजातं, निषिद्धकर्मोत्पाद्यनानाविधा-

धर्मसाध्यं नरकादिकं, क्षुत्पिपासानिवृत्त्याद्यर्थक्रियासमर्थं प्रत्यक्षादिप्रमाणप्रमितं स्वेनापि क्षुत्पिपासादिनिवृत्तयेऽद्यमानमन्नोदकादिकमर्थजातं, परमेश्वरेण च लोकानुग्रहाय प्रतिकल्पं क्रियमाणं महदहंकारादिकं ब्रह्माण्डतदन्तर्गतमहीमहीधरादिकं, रामायणभारतादिग्रन्थैः प्रतिपादितं रामकृष्णादीनां रावणकंसहननाद्यलौकिकचरित्रं निवृत्ततर्षैर्ब्रह्मसाक्षात्कारवद्भिरेवात्यादरेणानवरतं गीयमानं सर्वमपि मिथ्याभूतं तत्प्रमाणान्यप्यतत्त्वावेदकत्वादप्रमाणानि किन्तु कर्तृत्वभोक्तृत्वसत्त्वादिसकलधर्मविकलं तत एवार्थक्रियासामर्थ्यविकलं वेदादिप्रमाणेन कदापि कथमप्यवेद्यं यत्तदेव किल पारमार्थिकं वस्तुतत्त्वमिति हि बौद्धवान्ताशनं मायावादिराद्धान्तसर्वस्वम् । तदेतदाकर्ण्य निरर्गलमसंबद्धप्रलपनशील उन्मत्तोऽपि जिह्रेति । न हि स्वक्रियाविरुद्धमुन्मत्तोऽप्यभिलपति । तृप्त्यर्थं भोजनं परप्रतिपत्त्यर्थं च शब्दमुपादत्ते तत्कारणं च तन्नेति । तस्मान्मायावादस्यैव सर्वदुर्वादिभ्योऽत्यन्तहेयतैवेति तदुक्तं परीक्षकैः—

सौगता वेदबाह्या हि वेदाप्रामाण्यवादिनः ।
अवैदिका इति ज्ञात्वा वैदिकैः परिवर्जिताः ॥
वेदान्प्रविश्य वेदानां योऽप्रामाण्यं प्रसाधयेत् ।
मायी तु यत्नतस्त्याज्यो वैदिकैर्हितशत्रुवत् ॥

एतदेवाभिप्रेत्य बादरायणेन उमारमणेन कुमारेण भास्करेण पार्थसारथिना विज्ञानभिक्षुरामानुजप्रभृतिभिः बहुभिः अद्वैतवादस्य बौद्धवादत्वं उक्तं उपपादितं च तदेव अद्वैतमतविमर्शेऽपि ।

तदेतदसहमानाश्च बौद्धाननुसरंतोपि सर्वज्ञबादरायणोमारमणादिमतविरुद्धं बौद्धाद्वैतमतयोर्भेदं वदंतः बादरायणाद्यनुयायिषु मायावादमसच्छास्त्रमित्यादिश्लोकोदाहर्तृषु अन्धगोलांगूलन्याययोजनादिरूपं महासाहसं कुर्वाणाः हाराणशुक्ल चिन्नादिस्वामिमहेश्वरादयः ये जगुः खंडनाभासान् तेषां भ्रांतिः प्रकाश्यते ।

तथा हि दृश्यते हि एवं आनंदाश्रममुद्रिते पद्मपुराणपुस्तके १८३४ पत्रे पाठः

"सुखमात्यन्तिकं ब्रह्म ह्यश्नामि सतं शुभे ×

पार्वत्युवाच–

तामसानि च शास्त्राणि समाचक्ष्व ममानघ । संप्रोक्तानि च यैर्विप्रैर्भगवद्भक्तिवर्जितैः ॥ तेषां नामानि क्रमशः समाचक्ष्व सुरेश्वर ।

रुद्र उवाच—

शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां स्मरणमात्रेण पातित्यं ज्ञानिनामपि ॥ प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः प्रोक्तानि च ततः शृणु ॥ कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥ धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णुना बुद्धिरूपिणा ॥

* बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् । मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ॥ मयैव कथितं देवि कलौ ब्राह्मणरूपिणा । ] अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ॥ कर्मस्वरूपत्याज्यत्वमत्र वै प्रतिपाद्यते । [ +सर्व धर्मपरिभ्रष्टं वैधर्म्यत्वं तदुच्यते ॥ परेशजीवयोरैक्यं मया तु प्रतिपाद्यते । ] ब्रह्मणोऽस्य स्वयं रूपं निर्गुणं वक्ष्यते मया ॥ सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे । वेदार्थवन्महाशास्त्रं मायया यदवैदिकम् ॥

---

× अत्र क. ज. झ. फ. पुस्तकेषु अध्यायपरिसमाप्तिर्वर्तते

* धनुश्चिह्नांतर्गतःपाठः क. ज. झ. फ. पाठः पुस्तकस्थः ।

+ धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. फ. पुस्तकस्थः ।

एवं स्थिते अत्र क. ज. झ. फ. पुस्तकेषु अध्यायपरिसमाप्तिर्वर्तते इत्येतावन्मात्रेण पार्वत्युवाच इत्यारभ्य अध्यायपरिसमाप्तिं यावत् पाठो नास्त्येवेति निश्चयो भवितुं नार्हति। एतच्छ्लोकानां पद्मपुराणे अध्यायान्तरस्थत्वसंभवात् । युक्तं च अध्यायान्तरस्थत्वम्। "बौद्धशास्त्रमसत्प्रोक्तम्" इत्यादि सार्धश्लोकस्य तथा सर्वधर्मेति श्लोकस्य च क. ज. झ. फ. पुस्तकस्थइत्युक्तत्वेन पार्वत्युवाचेत्यारभ्य अध्यायपरिसमाप्तिं यावत् पाठस्य क. ज. झ. फ. पुस्तकस्थताया अङ्गीकारावगमात्।

यदि पद्मपुराणप्रकाशकस्य क. ज. झ. फ. संज्ञकेषु पुस्तकेषु पार्वत्युवाचेत्यारभ्य अध्यायपरिसमाप्तिं यावत् पाठो नास्त्येवेत्यभिप्रायः स्यात् तदा "बौद्धशास्त्रमसत्प्रोक्तं" इति सार्धश्लोकस्य "सर्वधर्मपरिभ्रष्ट" इत्यादि श्लोकस्य उत्तरत्र च एतदध्यायान्तश्लोकानां च. क. ज. झ. फ. इति संज्ञकेषु पुस्तकेषु विद्यमानत्वप्रतिपादनविरोधः स्यादिति।

सति चैवं "तत्रैव पुनरपि लिखितं यत् पार्वत्युवाचेत्यतः प्रागेवाध्यायपरिसमाप्तिरिति। तेन पार्वत्युवाचेत्यारभ्य अध्यायपरिसमाप्तिं यावत् पाठो नास्त्येवेति सिद्धमिति" यच्छुक्लेनोक्तं तदत्यन्तमयुक्तम्।

वस्तुतः पद्मपुराणप्रकाशकः वंचकः ज्ञानलवदुर्विदग्धश्च इति तत्कृतचिह्नादिकमविश्वसनीयमेव।

तथाहि पद्मपुराणातिरिक्तेषु आनन्दाश्रममुद्रितेषु सर्वेषु पुस्तकेषु प्रथममादर्शपुस्तकोल्लेखपत्रिकेति कांचन पत्रिकां संगमय्य तस्यां च क. इति संकेतितं पुस्तकं अमुकपत्रेषु अमुकलिप्यामपुकसंवत्सरे अमुकनाम्ना विदुषा लिखितं एतस्माच्च पण्डितादधिगतमस्माभिः ख. इति संकेतितं चैतादृशं इत्येवं क. ख. च. छ. ज. झेत्यादि स्वसंकेतितानां सर्वेषां पुस्तकानां लिपिपत्रलेखकदातॄणां नामनिर्देशादिकं दृ-

श्यते। सत्यामप्येवं आनंदाश्रमपुस्तकप्रकाशकपद्धतौ पद्मपुराणपुस्तकमात्रे प्रथममादर्शपुस्तकोल्लेखपत्रिकां अप्रकाश्यैव स्वमतविरुद्धानां केषांचिदध्यायानां श्लोकानां पदानामक्षराणां वा प्रक्षिप्ततां ज्ञापनेन सर्वान् वंचयितुं स्वमनःपरिकल्पितेषु क. खेत्यादिरूपेण संकेतितेषु पुस्तकेषु अयमध्यायोऽमुकपुस्तकेऽस्ति अमुकपुस्तके च नास्ति तथा श्लोकोऽयं पदमिदमक्षरमिदममुकपुस्तकेषु अस्ति अमुकपुस्तकेषु नास्तीति निःशंकं लिखतीतीयं पराकाष्ठा स्वमताग्रहस्य प्रतारकतायाश्चेति।

तथा "यश्च मूढतमो लोके यश्च बुद्धेः परंगतः। तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः॥ इत्युक्तरीत्या क्लिश्यमानत्वं विदांकुर्वन्तु विद्वांसः।

यद्य प्रकाशकः पण्डितो भवेत् तदा स्वमताननुगुणान् सर्वानपि श्लोकान् कुण्डलितान्कृत्वा प्रक्षिप्ततामपि संसूच्य तावन्मात्रेण स्वमतसिद्धिं मन्वानः सुखी भवेत् । यदि च मूढतमो अभविष्यत् अथापि अनेन ग्रंथेन स्वमतस्यासम्मतत्वं बोध्यते इत्यजानानः यथास्थितं पुस्तकं प्रकाश्य सुख्यभविष्यत्। उभयबहिर्भूतश्चायं प्रकाशकः कस्य वा भागस्य धनुश्चिह्नान्तरितत्वे कस्य च भागस्य प्रक्षेपे कृते वा स्वाभिमतसिद्धिर्भवेदित्यनाकलयन् केवलं बौद्धशास्त्रमसत्प्रोकमित्यादिभागस्य स्वबाधकतामनुसन्दधानः "दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणे"त्यत्स्यानन्तरं परिदृश्यमानबौद्धशास्त्रमसत्प्रोक्तमित्यादेः कलौ ब्राह्मणरूपिणेत्यन्तस्य सार्धश्लोकस्य कुण्डलान्तरितत्वे कृते दैत्यानामित्यस्य च अपार्थमित्यस्य च का संगतिर्भवेत् कथं चार्थः संजाघटीति एतदनालोचयन् बौद्धशास्त्रमिति सार्धश्लोकस्य कुण्डलितत्वमकार्षीत् अनेन ज्ञानलवदुर्विदग्धत्वं अस्य सिद्ध्यति।

## शुक्लाभिमतमाध्वपरिचयनिरासः ।

यदि हि वादिनः स्वीयाचार्याणां गौरवेणैव प्रमेयव्यवस्थापनं कुर्युः, भवतु तदा प्रतिपक्षिणां परकीयाचार्येषु यथाकथञ्चित् मिथ्याभूतानपि दोषान् प्रकल्प्य तदुद्घोषणेन वाचकजनमानसकलुषीकरणोद्यमः सफलः यदा तु वादिप्रतिवादिसम्मतैः प्रमाणैरेव व्यवस्थाप्यन्ते प्रमेयाणि न तदावसरः परकीयाचार्यपरिचयप्रदानस्य इति। अस्थाने किलायमादौ माध्वपरिचयाभासोपन्यासः शुक्लस्य। अथापि अप्रमाणतमेन स्वव्याहतेन चानेनोपन्यासेन माभूद्दूरोत्सारितमात्सर्याणां दुराग्रहग्रहागृहीतचेतसां भ्रान्तिरिति किञ्चिदत्र समालोचयामः ।

यदत्र मध्वयतीन्द्रविषये सौरपुराणोदाहरणं तदत्यन्तमसंगतं तथा हि कैरप्यभियुक्तैरस्यानुदाहरणादपुराणत्वमेवेति केचिदातिष्ठन्ते । तुष्यत्विति न्यायेन स्वीकृतेऽपि पुराणत्वे—

सात्त्विकास्त्रिदशाः सर्वे असुरा राजसा मताः ।
तामसा राक्षसाः सर्वे प्रकृत्याकृतिवर्णतः ॥
धर्मः सुराणां पक्षः स्यादधर्मोऽसुररक्षसाम् ।
वेदत्रयोक्ता ये धर्मास्तेऽनुष्ठेयास्तु सात्त्विकैः ॥
अधर्मोऽथर्ववेदोक्तो राजसैस्तामसैः श्रितः ।
विष्णुक्रमणपर्यन्तो यागोऽस्माकं यथा तथा ॥
राजसैस्तामसैर्ब्रह्मरुद्रावीज्यौ तु तद्गुणौ ॥ इति ।

( सर्वसिद्धान्तसंग्रहे व्यासमतनिरूपणे शंकराचार्यः )

किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि ।
तामसा निरयायैव वर्जयेत्तान्विचक्षणः । ( पद्म० ) इत्यादिना

शिवसर्वोत्तमत्वादिवर्णनपराणां वचनानां तामसाधिकारिकतया तामसत्वेन निरयहेतुतया त्याज्यत्वावगमात् सात्त्विकमुमुक्षुजनानादरणीयतामेवापरे प्राहुः ।

वयं तु ब्रूमः–मात्सर्यात् मधुमध्वशब्दयोः कतिपयाक्षरसाम्यमात्रेण मधुनिन्दापरानिमान् श्लोकान् श्रीमध्वयतीन्द्रे योजयितुं हठात् प्रवर्तमानानां साहसं दुःसाहसमेव । तथा हि एतेषु श्लोकेषु प्रतिपाद्यमानो मधुः सर्वेष्वपि श्लोकेषु मधुः मधुरित्येव निर्दिष्टः । मदनसखवसन्तावतार इति च एकत्र पुनः मधुशब्दाचार्यशब्दयोः सन्धिमाश्रित्य मध्वाचार्य इति मध्वयतीन्द्रस्तु–"यदीमनु प्रदिवो मध्व आधवे गुहासन्तं मातरिश्वामथायति" "विद्वान् मध्व उज्जभाराद्दृशेकं" 'मध्वो वो नाम मारुतम्" "विष्णोः पदे परमे मध्व उत्सः" इत्यादिश्रुतिषु मध्व इति मुख्यप्राणस्यावतार इति च वर्णितः । तथा मधुः ऐशवीयाष्टमशताब्द्यामवस्थितस्य पद्मपादाचार्यस्य साक्षाच्छिष्यस्तद्दत्तशापश्च । मध्वयतीन्द्रस्तु ऐशवीयत्रयोदशशताब्दीसमवस्थितस्य अच्युतप्रेक्षाचार्यस्य शिष्यः । एवं बहुतराब्दशतकव्यवहितावस्थानतया स्वयमवगतयोरत्यन्तासंभावितमैक्यं वर्णयन् स्फुटप्रतिभासमानमपि स्वव्याघातं न गणयतीत्याश्चर्यम् । एवंविधा बहवो विरोधाः सौरपुराणं उपदर्शितश्रुतिजातं चावलोकयतां सुगमाः ।

सौरपुराणोक्तानां पद्मपादानुयायित्वतत्समानकालीनत्ववैष्णवसंप्रदायप्रवर्तकत्वादीनां आनन्दगिरिविद्यारण्यकृतशंकरविजयोक्त्यनुसारेण शंकरशिष्यकोटिप्रविष्टेषु हस्तामलकलक्ष्मणादिष्वेव संभवेन तन्निन्दापरत्वमेवोक्तपुराणानां उपपद्यते । संभाव्यते च महाशैवरेवणसिद्धप्रदत्तचन्द्रमौलीश्वराराधकं महाशैवसंप्रदायप्रवर्तकं सुरेश्वराचार्यमनुसरतां परमतकालानलादीनां पद्मपादाचार्यमनुसरतां वैष्णवसम्प्रदायानुयायिनां हस्तामल-

कलक्षमणादीनां ऊर्ध्वपुण्ड्रमुद्राधारणादिरूपाचारभेदेन च मिथः कलहे वैष्णवनिन्दायै शैवैः निर्माय सौरपुराणे प्रक्षेपकरणमपि ।

एषैव केदारखण्डगतत्वेनोदाहृतानां पद्यानामपि गतिरिति युक्तमुत्पश्यामः ।

यदपि शुक्लोदाहृतं मात्स्यपुराणवचनं "निन्दतो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसा" इति । तदपि ईश्वरस्य ईशनशीलस्य नारायणस्य विष्णोः संबन्धिनं ईश्वरेण वैष्णवोत्तमेन शम्भुना स्वीकृतं विष्णुपादोदकधारणादिरूपं वा मार्गं निन्दतां असत्यमित्यादिश्लोकार्थविचारावसरे वक्ष्यमाणदिशा विश्वमिथ्यात्वजीवेश्वरैक्यावेदककुशास्त्रासक्तमानसत्वेन निर्णीतानामद्वैतिनामेव निन्दापरं न पुनरैश्वरमार्गप्रवर्तकस्य सच्छास्त्रप्रवर्तकस्य मध्वयतीन्द्रस्य । यदपि ईशानस्तु त्यद्वैतस्तवयोस्स्वगोष्ठीनिष्ठप्रलापमात्रत्वेन असंप्रतिपन्नप्रमाणभावयोः उदाहरणं तदत्यन्तासंगतं असंप्रतिपन्नप्रमाणभावैरपि वचनैरर्थसिद्धौ कः कमर्थं न साधयेत् ।

यदपि दैत्यत्वदानवत्वादिकथितं तदसत्यमप्रतिष्ठन्ते । ईश्वरोऽहमित्यादिना गीतोक्तदैत्यलक्षणलक्षितानामद्वैतिनामेव संघटते अनुमतं चैतत् कुंडगोलकश्वपचश्वविड्वराहरासभगोविन्दशंकरवाणीपतिकलिशकुनिमणिमदादिसकलात्मैक्यवादिनामद्वैतिनाम् ।

यदपि वंगमुद्रितवेदांतदर्शनेतिहासेऽपि' इति तदपि निर्मूलत्वात् अनुपादेयमेव ।

किंच यदि मध्वाचार्यः पूर्वमद्वैती तदा श्रृंगेरीमठाधीशात्कथं पराजयः परस्परं अद्वैतिनोर्विजयहेतुकथाया असंभवात् यदि द्वैती तदा पराजितस्तद्द्वेषात् द्वैती बभूवेत्युक्तिः कथं संगच्छतामित्यादि सुधियो विदांकुर्वंतु तस्मादज्ञानविप्रलंभद्वेषादिमूलत्वादुपदर्शितः परिचयाभास एव न वास्तवः परिचयः इति ।

यद्यपि शंकर परिचयदानमनावश्यकमिदानीं तथापि शंकराचार्याः बौद्धमतविध्वंसकाः तेषामेव प्रभावाद्वैदिकधर्मरक्षणमासीत् इति कथं तन्मतं बौद्धमतं भवेदिति स्वयं विमुह्य तथाऽन्यानपि मोहयन्ति हाराणचन्द्रभट्टाचार्यादयः अतः शंकरपरिचयदानं आवश्यकं मन्वानाः लेशतो दर्शयिष्यामः ।

शंकराचार्यावतारतः पूर्वकालीनावस्थितिः अवतारानंतरकृत्यं च ।

"बौद्धादिनास्तिकध्वस्तवेदमार्गं पुरा किल ।
भट्टाचार्यः कुमारांशःस्थापयामास भूतले ॥
वेदबाह्यान्निराकृत्य भट्टाचार्यैर्गते पथि ।

(शंकराचार्यकृतसर्वसिद्धान्तसंग्रहः)

"भट्टाचार्याख्यो द्विजवरः कश्चिदुदग्देशादागत्य दुष्टमतावलम्बिनो बौद्धान् जैनानसंख्यान् राजमुखादनेकविद्याप्रसंगभेदैः निर्जित्य तेषां शीर्षाणि परशुभिश्छित्वा उलूखलेषु निक्षिप्य कटभ्रमणैश्चूर्णीकृत्य चैवं दुष्टमतध्वंसमाचरन् निर्भयो वर्तते ॥ इति ।

श्रुत्वैतदद्भुतं कर्म गुरुः (शंकरः) शिष्यसमन्वितः ।
प्राप्तो रुद्राख्यनगरं जयशब्दविजृम्भितं ॥
(तदनु) जानुमात्रदग्धोपि भट्टाचार्यः ।

(तं शंकराचार्यं प्रति) जाग्रत्कालानागतो नूतनो बौद्धतर इति प्राहेत्यादि, (आनन्दगिरि०)

उपन्यसत्सु साक्षेपं खंडयत्सु परस्परम् ।
तेषूदतिष्ठन्निर्घोषो भिन्दन्निव रसातलम् ॥
अधः पेतुर्बुधेन्द्रेण क्षताःपक्षेषु तत्क्षणम् ।
व्यूढकर्कशतर्केण तथागतधराधराः ॥
स सर्वज्ञपदं विज्ञोऽसहमान इव द्विषाम् ।

२

चकार चित्रविन्यस्तानेतान् मौनविभूषितान् ...... ॥
श्रुत्वाऽशरीरिणीं वाणीं ददर्श वसुधाधिपः ।
मूर्तिं मधुद्विषः कुम्भे सुधामिव सुराधिपः ॥
निरस्ताखिलसदेहो विन्यस्तेतरदर्शनात् ।
व्यधादाज्ञां ततो राजा वधाय श्रुतिविद्विषाम् ॥
आसेतोरातुषाराद्रे र्बौद्धानावृद्धबालकम् ।
न हन्ति यः स हन्तव्यो भृत्यानित्यन्वशान्नृपः ॥
कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु ।
निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः ॥ इति ।

अन्यत्र च—

सांयात्रिकैः सह ययुः कतिचिन्निलीनाः
संप्राप्तमुक्ति भुवि केचन बकमुख्याः ।
वेषान्तरेण कृतसौगतलिङ्गभङ्गाः
राज्यान्तवर्त्मसु गताः सुगता विचेरुः ॥

इत्यादि शंकराचार्यानंदगिरिविद्यारण्यादिवचनैः शंकराचार्यावतारात्पूर्वमेव सर्वत्रापि भारते वर्षे बौद्धैर्भूपालादीन् स्ववशे विधाय वैदिकधर्मविप्लावनेऽनुष्ठीयमाने भट्टाचार्यः ( कुमारिलभट्टः ) बौद्धान् जित्वा देवतागणसाहाय्येन सुधन्वनामानं भूपालश्रेष्ठं स्ववशमकरोत् । तदनु सुधन्वा स्वभृत्यान् सकलबौद्धविध्वंसनाय चाज्ञापयामास । अथ च बहवो बौद्धाः अग्नौ प्रवेशिताः बहवश्च शिरश्छेदेन उलूखलप्रक्षेपकटभ्रमणैश्चूर्णीकृताः केचन द्वीपान्तरं गताः कतिचिदत्रैव वैदिकवेषमाचारं चाङ्गीकृत्य भाट्टपक्षमेव समाश्रिताः । एवमखिलमपि आसेतुहिमाचलं भारतभूमण्डलं भट्टानु-

यायिभिर्वैदिकैरेव व्याप्तमासीत् । न कोऽप्यवैदिकोऽत्रावस्थातुं शशाकेति ।

शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां स्मरणमात्रेण पातित्यं ज्ञानिनामपि ॥
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ।
बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ॥
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
रुद्रप्रोक्तानि शास्त्राणि तामसान्येव पार्थिव ।
सम्मोहनार्थं लोकानां प्रोक्तवान् वृषभध्वजः ॥
एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥

इत्यादिपद्मपुराणवाराहपुराणादिवचनेन नूतनो बौद्धतर इति भट्टाचार्यवचनेन च शंकराचार्यैः प्रच्छन्नबौद्धमतरूपं मायावादशास्त्रं प्रवर्तितमिति च ।

स्पष्टं ज्ञायते अतः ( बौद्धमतस्य पूर्वमेव नष्टत्वात् वेदमार्गस्य निष्प्रत्यूहं प्रवर्तितत्वाच्च ) शंकराचार्याणां बौद्धमतविध्वंसित्वं वैदिकमतप्रवर्तकत्वं च यदुक्तं हाराणाद्यैः तदत्यन्तासंगतमेव । स्वीयप्राचीनचार्यवचनाज्ञानमूलकं च ।

शंकराचार्याणां उत्पत्त्यादेः प्रकारं आनंदगिरिकृतशंकरविजयीय द्वितीयप्रकरणतः विद्यारण्यकृतविजयतः गुरुवंशकाव्याच्च अवगत्य पुनः इतराचार्यपरिचयदानाय न प्रवर्तेरन् इति निश्चिनुमः अथापि प्रयतेरन् तदा विशेषतः शंकरपरिचयदानेन तोषयिष्यामः ।

यच्छून्यवादिनां शून्यं तदेव ब्रह्ममायिनाम्"

यदत्राहुः हाराणभट्टप्रभृतयः अद्वैतवादिनः ब्रह्म सदित्यभ्युपयन्ति "न सन्नासन्न सदसन्न चाप्यनुभयात्मकं चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका जगुः 'सदसदुभयानुभयात्मकं चतुष्कोटिविनिर्मुक्तं शून्यमेवेत्यादिवाक्यैः शून्यं न सदिति सिद्धयति अतस्तयोर्भेद इति । तन्न यथा न सन्नासन्न सदसत् इति वाक्येन शून्यस्यसत्त्वाभावः सिद्धयतीतिउच्यते तथा ब्रह्मणोपि ।

न सच्चाहं न चासच्च नोभयं केवलः शिवः ।

अस्ति नास्त्यस्ति नास्तीति ‥ भगवानाभिरस्पृष्टः ॥

सः भगवानाभिः अस्तिनास्तीत्यादिकोटिभिः चतसृभिरप्यस्पृष्टः ( इति शंकरभाष्यम् )

एतैर्वाक्यैः अस्तित्वा(सत्वा)भावस्योक्त्या ब्रह्मणोपि सत्त्वाभावः सिद्धयतीति ब्रह्मशून्ययोः सत्त्वासत्वाभ्यां भेदस्य वक्तुमशक्यत्वात्

यदप्युक्तं न सच्चाहं न चासच्च नोभयं केवलः शिवः इति वाक्येन सत्वासत्वसदसत्वरूपकोटित्रयविनिर्मुक्तत्वसिद्धावपि न चतुष्कोटिविनिर्मुक्तत्वमिति तत्तुच्छम् ।

ब्रह्मणः जगत इव अनिर्वचनीयत्वापत्त्यादिदोषेण सदसद्विलक्षणत्वरूपचतुर्थकोटेः अद्वैतिभिः अंगीकर्तुमशक्यत्वेन न सच्चाहमित्यादिवाक्येन कोटित्रयविनिर्मुक्तत्वस्य कथनेऽपि चतुष्कोटिविनिर्मुक्तत्वस्य सिद्धेः ।

कोटिर्नाम धर्मः ब्रह्म तु निर्धर्मकत्वात् सर्वकोटिविनिर्मुक्तं इति चतुष्कोटिविनिर्मुक्तत्वस्य सुतरां सिद्धेश्च ।

यत्तु ब्रह्मणि सत्तारूपातिरिक्तधर्माभावेपि स्वरूपसत्तया सदिति शून्याद्विलक्षणमिति उक्तं तदपि तुच्छं—

"तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः । शून्यवादिनां शून्यताया अपि सत्यत्वादिति" भामतीवाक्येन—

द्वे सत्ये समुपाश्रित्य बौद्धानां धर्मदेशना ।

लोके संवृत्तिसत्यञ्च सत्यं च परमार्थतः ॥ इति ॥

"भवांस्तु नास्तित्वं शून्यतार्थं परिकल्प्य यत्प्रपंचजालमेव संवर्धमानो न शून्यतायां प्रयोजनं वेत्ति अथ का पुनः शून्यता सापि तत्रैवोक्ता—

अपरप्रत्ययं शान्तं प्रपंचैरप्रपंचितम् ।

निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम् ॥

अतः प्रपंचनिवृत्तिस्वभावायां शून्यतायां कुतो नास्तित्वं इत्यादि बौद्धग्रंथेनापि त्रिकालाबाध्यत्वरूपस्वरूपसत्त्वसिद्धेः ।

एतेन अद्वैतिनः भ्रमस्य सदधिष्ठानकत्वं मन्वते शून्यवादिनस्तु भ्रमस्य असदधिष्ठानत्वं मन्वते इति यच्चापरं वैलक्षण्यं उक्तं तदपि निरस्तम्

अद्वैतिभिः भ्रमाधिष्ठानभूताद्वैतिब्रह्मण इव शून्यवादिभिः भ्रमाधिष्ठानशून्यस्यापि त्रिकालाबाध्यसद्रूपत्वांगीकारात् ।

एतेन यदुक्तं शुक्लपंडितेन अद्वैतमते बाधस्य साधिष्ठानत्वेन शून्यवादिमते च तस्य निरधिष्ठानत्वेन शून्याद्वैतवादयोर्भेद इति तदपि अपास्तम् ।

शून्यस्यापि उक्तरीत्या परमार्थसद्रूपत्वेन अद्वैतवादे ब्रह्मणेव शून्यवादे शून्येनापि बाधस्य साधिष्ठानत्वोपपत्तेः ।

एतेनैव यदुक्तं चिन्नस्वामिना अद्वैतवादस्य सद्वादत्वेन विवर्तवादत्वेन च अतथाभूतात् शून्यवादाद्वैलक्षण्यमिति तदपि निरस्तम् ।

उक्तरीत्या शून्यस्यापि सद्रूपत्वेन शून्यवादस्यापि सद्वादत्वात् । शून्ये सर्वं कल्पितमिति वदतां शून्यवादिनां विवर्तवादित्वस्य सुप्रसिद्धत्वाच्च ।

अद्वैतमतविमर्शे प्रथमं अद्वैत्यभिमतं ब्रह्म माध्यमिकाभिमतात्

128

शून्यात् अभिन्नमिति प्रदर्शिते अद्वैतवादिनां मते ब्रह्मज्ञानस्वरूपं माध्यमिकशून्यं तु न ज्ञानस्वरूपम् । न हि शून्यवादिनः शून्यस्य ज्ञानस्वरूपतामंगीकुर्वन्ति । इति श्रीस्वामिभिः साधयितुं शक्यते इति हाराणभट्टेन आक्षिप्ते च पुनरद्वैतविमर्शकारैः द्वितीयपुष्पे तदीयग्रन्थसम्मत्यैव शून्यस्य ज्ञानरूपत्वे व्यवस्थापिते ।

"यद्यपि विमर्शकारोदाहृतग्रंथैः शून्यवादिनः शून्यस्य ज्ञानरूपतामंगीकुर्वन्ति इति सिद्धयति अथापि शून्यस्य ज्ञानरूपत्वं शंकराचार्यात्प्राचीनैर्नांगीकृतम् । शंकराचार्यप्रभावेण शंकराचार्यात् अर्वाचीनैरेव स्वीकृतमित्युक्त्वा अस्मिन् विषये—

नास्ति बुद्धिरपीत्याह वादी माध्यमिकः किलेति—

मायोपमं च विज्ञानमुक्तमादित्यबंधुना ।। इति च ।

यत् वाक्यद्वयं प्रमाणतया उदाहृतं भट्टाचार्येण तत्तु पूर्वोत्तरवाक्यानवलोकनमूलकमेव । वाक्यद्वयेनापि शून्यस्य ज्ञानरूपत्वाभावासिद्धेः । तथा हि—

प्रत्यक्षसिद्धबाह्यार्थमसौ वैभाषिकोऽब्रवीत् ।
बुद्ध्याकारानुमेयोऽर्थः बाह्यः सौत्रांतिकोदितः ।।
बुद्धिमात्रं वदत्यत्र योगाचारो न चापरम् ।
नास्ति बुद्धिरपीत्याह वादी माध्यमिकः किल ।।

( सर्वसिद्धांतसंग्रहे शंकराचार्यकृतं माध्यमिकमतं )

इति वाक्यैः वैभाषिकः बाह्यपदार्थानां प्रत्यक्षसिद्धत्वं वदति । सौत्रान्तिकः बाह्यार्थानां अनुमेयत्वं वदति । योगाचारः साकारं ज्ञानं वदति । माध्यमिकः साकारविज्ञानमपि नास्तीत्याहेति ज्ञायते न तु शून्यस्य ज्ञानरूपत्वाभाव इति । तथा—

"मायोपमं च विज्ञानमुक्तमादित्यबंधुना" इति वाक्यमपि शून्यस्य

ज्ञानरूपत्वाभावे प्रमाणं भवितुं नार्हति। न ह्यस्मिन् श्लोके शून्यं ज्ञानरूपं नेति उक्तम् किन्तु—

फेनपिंडोपमं रूपं वेदना बुद्बुदोपमा।
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः॥
मायोपमं च विज्ञानमुक्तमादित्यबंधुना।
एवं धर्मान् वीक्षमाणः भिक्षुरारब्धवीर्यवान्॥
दिवा वा यदि वा रात्रौ ........।
प्रतिविंदेत् पदं शान्तं संस्कारोपशमं शिवम्॥

इति पूर्वोत्तरवाक्यैः रूपसंज्ञावेदनासंस्कारविज्ञानस्कंधानां मायोपमत्वादिकमभिधाय तज्ज्ञानिनः (शून्यात्मक) शिवपदावाप्तिरूपो मोक्षः फलत्वेनाभिहितः इत्येवावगम्यते।

विद्यारण्यैरपि-

आकारसहिता बुद्धिः योगाचारस्य संमता।
केवलां संविदं स्वस्थां मन्यंते मध्यमा पुनः॥

इति वाक्योदाहरणेन योगाचाराभिमताकारसहितबुद्ध्यनंगीकारपूर्वकं शून्यस्य ज्ञानरूपत्वांगीकरणमाविष्कृतं—

बौद्धाचार्येण शांतिपादेनाप्युक्तं "अद्वयज्ञानैकरूपां शून्यतां विभाव्य ॐशून्यताज्ञानवज्रस्वभावात्मकोऽहं इति अधितिष्ठेत्। इति शून्यस्य ज्ञानरूपत्वं अद्वितीयत्वं च।

अन्यत्रापि रत्नाकरशांतिपादेनोक्तं—

केवलां अद्वयविज्ञप्तिलक्षणां...अनंतां पश्येत्।

इदमुच्यते लोकोत्तरं शून्यताज्ञानं निष्प्रपंचं निर्विकल्पं इति वाक्येन शून्यस्य ज्ञानरूपत्वं।

तस्मात् "नास्ति बुद्धिरपीत्याह" 'मायोपमं च विज्ञानं' इति वा-

कयाभ्यां शून्यस्य ज्ञानरूपत्वाभावः प्राचीनैः स्वीकृत इति न सिद्ध्यतीति असांप्रतमेतद्वाक्योदाहरणं हाराणभट्टाचार्यस्य शून्यस्य ज्ञानरूपताबोधकानां विद्यारण्यादिभिरुदाहृतानां केवलां संविदं स्वस्थां इत्यादि वाक्यानां अर्वाचीनत्वे प्रमाणानुपन्यासाच्च प्राचीनैः शून्यस्य ज्ञानस्वरूपत्वं न स्वीकृतमित्युक्तिः अयुक्तैव तथा च बौद्धाद्वैत्यभिमतयोः * निर्विशेषयोः अद्वयज्ञानस्वरूपयोः सद्रूपयोः अद्वैतिब्रह्मशून्ययोः न कश्चिद्भेद इति

ब्राह्मणवर्णब्रह्मचर्याद्याश्रमाचारस्वर्गलोकनरकपुण्यपापादीनां उभाभ्यां अध्यस्तत्वांगीकारात् न जगद्विषयेऽपि वैलक्षण्यं सौगताद्वैतमतयोरिति ।

---

## अद्वैतिमतविज्ञानवादिबौद्धमतयोरैक्यसमर्थनम् ।

विज्ञानवाद्यद्वैतिमतस्य विज्ञानवादिबौद्धमताद्भेदसमर्थनार्थं यदवादिपंडितम्मन्येन शुक्लेन बौद्धा वेदस्याप्रामाणिकत्वं बाधस्य निःसाक्षिकत्वं निरधिष्ठानत्वं च बाह्यस्य ज्ञानाकारत्वं विज्ञानस्य नानात्वं क्षणिकत्वं च प्रत्यक्षानुमानयोरेव प्रमाणत्वं प्रमाणानामप्रमाण्यस्य स्वतस्त्वं प्रामाण्यस्य परतस्त्वमातिष्ठंते श्रीमच्छंकरभगवत्पादास्तु वेदस्य प्रामाण्यं बाधस्य ससाक्षिकत्वं साधिष्ठानत्वं च बाह्यवस्तुनश्च व्यावहारिकसत्तां विज्ञानस्यैकत्वं नित्यत्वं च प्रत्यक्षादीनां षण्णां प्रमाणत्वं प्रमाणानां प्रामाण्यस्य स्वतस्त्वं अप्रामाण्यस्य च परतस्त्वं परमेश्वरसत्तां चातिष्ठंते इति एवमुभयमतयोरत्यंतवैलक्षण्येऽपि बौद्धमतमेव श्रीमच्छंकराचार्यभगवत्पादैर्वैदिकत्वेन ख्यापितमिति कथनं तेजस्तमसोरैक्यकथनमनुकरोति इति तन्न युक्तं मतयोर्भेदो हि प्रतिपाद्यविषयभेदेन भवति यदधिष्ठानं अध्यस्तं चेति

---

* सर्वविशेषरहितत्वाच्छून्यवच्छून्यः ( इति सहस्रनामशांकरभाष्यम् )

द्वयं बौद्धमतप्रतिपाद्यं तदेव च 'यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्र-कल्पना चेति वाक्येन शंकराचार्यैरप्यूरीकृतमिति प्रतिपाद्यभेदाभावेनोभयोर्मतयोर्भेदवर्णनासंभवात् ।

यदपि वेदप्रामाण्यांगीकारतदभावाभ्यां बाधस्य ससाक्षिकत्व-निःसाक्षित्वांगीकाराभ्यां तस्यैव साधिष्ठानत्वनिरधिष्ठानत्वांगीकाराभ्यां बाह्यस्य व्यावहारिकसत्ताभ्युपगमज्ञानाकारत्वाभ्युपगमाभ्यां विज्ञानस्यैकत्वनानात्वांगीकाराभ्यां नित्यत्वक्षणिकत्वांगीकाराभ्यां प्रमाणषट्त्वप्रमाणद्वित्वांगीकाराभ्यां प्रामाण्याप्रामाण्ययोः स्वतस्त्वपरतस्त्वयोर्वैपरीत्यांगीकारेण ईश्वरसत्ताभ्युपगमतदभावाभ्यां चोभयोर्मतयोर्भेदवर्णनं तत्तुच्छं वेदप्रामाण्यादीनां सर्वेषामेवोक्तधर्माणां तत्प्रतिपादकत्वस्य चाद्वैतिभिर्मिथ्यात्वांगीकारात् मिथ्याधर्माणां भेदसाधकताया अद्वैतिभिर्वक्तुमशक्यत्वात् अन्यथा मिथ्याभूतैः सर्वज्ञत्वादिभिर्जीवेश्वरयोरपि भेदापत्त्याऽद्वैतभंगापत्तेः तस्मात् साधूक्तं अद्वैतमतविमर्शे बौद्धमतमेव शंकराचार्यैर्वैदिकत्वेन ख्यापितमिति । ( इदं त्ववधेयं )

बौद्धादिनास्तिकध्वस्तवेदमार्गं पुरा किल ।
भट्टाचार्यः कुमारांशः स्थापयामास भूतले ॥

इति पद्येन येषु कुमारिलभट्टेषु बहुमानं दर्शयतिस्म शंकराचार्यः तैरेव स्फुटमुपवर्णितं नूतनो बौद्धतर इति नूतनशब्दोदितं बौद्धमत-प्रतिप्रसवहेतुत्वं तरप्प्रत्ययांतबौद्धशब्दोदितं उत्कृष्टबौद्धत्वं च कथं परिजिहीर्षति इति तथा चोक्तं आनंदगिरिविरचिते शंकरविजये "भट्टाचार्यः परमगुरुमिदमुवाच जाग्रत्कालानागतो नूतनो बौद्धतरः कस्मादिहागत्य उत्तापयसि ।" इति ।

यदप्यादावेव 'वेदस्याप्रामाण्यमिति वक्तव्ये वेदस्याप्रामाणिकत्वमिति कथनेन प्रमाणानां अप्रामाण्यस्य इति कथनेन च प्रथमकवले

मक्षिकापातः इति न्यायानुसरणं तदपि आदित एव आरभ्य स्वग्रंथस्य प्रमादमूलतामावेदयत् तत्खंडनस्य नायाससाध्यत्वमित्यप्यावेदयति ।

किंच प्रमाणं भवन्वेदः किं जगद्विषये उत ब्रह्मविषये । नाद्यःसर्वस्यापि जगतः बाध्यत्वात्तद्विषयस्य कथमप्यबाध्यार्थबोधकत्वलक्षणप्रामाण्यासंभवात् अन्यथा शुक्ताविदं रजतमिति वाक्यस्यापि प्रामाण्यापातेन भ्रमवार्तैव विलुप्येत न द्वितीयः अद्वैतिमते ब्रह्मणोऽज्ञेयत्वाभ्युपगमेन ब्रह्मविषयकज्ञानजनकताया एवासंभवेन तद्विषयकप्रमाजनकत्वलक्षणप्रामाण्यस्य च सुदूरपराहतत्वात् ।

न च ब्रह्मणःज्ञेयतापक्षेनानुपपत्तिरिति वाच्यं तस्यैवासंभवदुक्तिकत्वात् तथाहि ब्रह्मणःज्ञेयत्वं वदन् तस्य प्रत्यक्षादिप्रमाणावेद्यत्वाच्छब्देनैव ब्रूयात् शब्दश्च वृत्तिज्ञानसहकृत एवार्थावगमायालं नान्यथा वृत्तिश्च यद्यपि शक्तिलक्षणान्यतररूपा तथापि अवाच्यत्वेनांगीकृते त्वदीये ब्रह्मणि शक्तेरसंभवाल्लक्षणैव वाच्या सापि लक्षणा, पदपदार्थयोः संबंधरूपा भवंती ब्रह्मरूपैकसंबंधिज्ञानमपेक्षते तच्च संबंधिज्ञानं पुनरुक्तरीत्या लाक्षणिकपदांतरेणैवेत्यनवस्थापाताद्ब्रह्मणःशब्दादपि ज्ञानविषयता न निर्वोढुं शक्यत इति अज्ञेयतैवाकामेनाप्यंगीकर्तव्येति ।

लक्ष्यतावच्छेदकधर्मापेक्षाया लक्षणाया निर्धर्मके ब्रह्मणि असंभवश्च, एवमसंगे ब्रह्मणि शक्यसंबंधाधीना लक्षणा कथं योयुज्यतां, व्याहतश्च इतरावेद्यत्वलक्षणस्वप्रकाशत्वमुपवर्णयतामद्वैतिनां ब्रह्मणो ज्ञेयत्वांगीकारःतस्मादज्ञेयमेव ब्रह्मेति वेदानां न तद्विषये प्रामाण्यं इत्थंच जगद्विषयकत्वब्रह्मविषयकत्वाभ्यां प्रामाण्यस्य वक्तुमशक्यत्वेनाप्रामाण्यमेवाद्वैतिमतरीत्याऽपि वेदानामिति न तस्मिन्विषये अद्वैतमतस्य बौद्धमताद्भेद इति ।

बाधस्याद्वैतिमते ब्रह्मणा ससाक्षिकत्वसाधिष्ठानत्वयोरिव बौद्ध-

मतेऽपि विज्ञानेन ससाक्षिकत्वसाधिष्ठानत्वयोः संभवान्न ते अपि मतयोर्भेदके ।

वस्तुतःअद्वैतिमतेऽपि न बाधस्य ससाक्षिकत्वं साक्षाद्द्रष्टरि संज्ञायामिति सूत्रात् साक्षाद्द्रष्टैव साक्षी ब्रह्म चाद्वैतिमते दृष्टिरूपमेव न द्रष्टृ इति कथं तेन ब्रह्मणा बाधस्य ससाक्षिकत्वं एवं अविद्यावृत्तिप्रतिबिंबितचैतन्यस्यैव साक्षित्वेन तस्य च मिथ्यात्वाद्बाधकाले तस्याभावेनाद्वैतिनां बाधस्य ससाक्षिकत्वमसंगतमेव इति ।

यच्च बौद्धैर्यत् बाह्यस्य ज्ञानाकारत्वं अंगीक्रियते न तदद्वैतिभिःयदद्वैतिभिर्बाह्यस्य व्यावहारिकत्वमाद्रियते न तद्बौद्धैरित्युभयमतयोर्भेदकथनं तदप्यसत् बौद्धानामिवाद्वैतिनामपि विषयस्य ज्ञानाकारतांगीकारस्य ( ज्ञानाभेदांगीकारस्य ) "अद्वितीयात्संवेदनादभेदेऽपि विषयस्य" इत्यादि विवरणग्रंथेन, अद्वैतिनामिव बौद्धानामपि बाह्ये व्यावहारिक ( मिथ्या )सत्तांगीकारस्य 'द्वे सत्त्वे समुपाश्रित्य' इति बौद्धग्रंथेनावगमात्तयोरपि भेदकत्वासंभवात् । बौद्धाद्वैतिभ्यां ज्ञानस्य निर्विशेषत्वांगीकारात् नानात्वक्षणिकत्वे एकत्वनित्यत्वे वा न ज्ञानेऽङ्गीकर्तुं शक्ये इति न तेषामपि भेदकता न चात्र ज्ञानस्य निर्विशेषतयोक्तधर्माणां तद्धर्मत्वासंभवेऽपि तत्स्वरूपत्व संभवान्नानुपपत्तिरिति वाच्यम् नानात्वक्षणिकत्वैकत्वनित्यत्वानां सोपाधिकत्वेन निरुपाधिकज्ञानस्वरूपत्वस्योभाभ्यामंगीकर्तुमशक्यत्वात् नांगीक्रियते च ज्ञाने एकत्वं नाम धर्मः शंकराचार्यैः यथोक्तं दशश्लोक्यां "न वा केवलत्वमिति" । व्याख्यातञ्च मधुसूदनसरस्वतीभिः "ननु एकमेवाद्वितीयमिति श्रुत्या एकत्वं प्रतिपाद्यते नेत्याह" न वा केवलत्वमिति, केवलत्वं एकत्वं तस्याविद्यकत्वात् इति ।

यदपि प्रमाणसंख्यावैषम्यान्मतवैषम्योपपादनं तदपि स्वस्य वदिकभट्टानुयायिताप्रदर्शनेन वैदिकतां संभावयितुमेवेति वचनामूलत्वादुपेक्ष्यं कथमन्यथा भाट्टानां सत्यद्वयकल्पनाद्यद्वैतिमतदूषणं

अद्वैतिनां भट्टाभ्युपगततात्त्विकप्रामाण्याद्यनंगीकारश्च संगच्छते । का वा शब्दादप्यपरोक्षमुररीकुर्वतामद्वैतिनां प्रमाणविभागव्यवस्था ।

यत्तु 'स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् । न हि स्वतो सतो शक्तिः कर्तुमन्येन शक्यते' इत्यादि भाट्टश्लोकवार्तिकमुदाहृत्य भट्टानां स्वतः प्रामाण्यवादित्वात् । व्यवहारे भट्टनय इति चित्सुखोक्त्या अद्वैतिनामपि स्वतः प्रामाण्यसिद्धिरित्यादिहाराणभट्टादीनां कथनं तन्न स्वतः प्रामाण्यावेदकतया त्वदुदाहृतं 'स्वतः सर्वप्रमाणानां' इति भट्टवार्तिकमनूद्य "तमतिदेशेन निराकरोति" एतेन शक्तिविशेषः प्रमात्वं तद्योगः प्रमालक्षणमित्यपास्तं दुरवधारणत्वादिति अद्वैतिभिः खंडनखंडखाद्ये भाट्टाभिमतप्रामाण्यस्वतस्त्वस्य खंडनेन भाट्टवत् वयमपि स्वतः प्रामाण्यवादिन इत्युक्तेः व्याहतत्वात् ।

किं च स्तम्भादिप्रत्ययो भ्रमः प्रत्ययत्वात् स्वाप्नप्रत्ययवदित्यनुमानेन प्रत्ययसामान्यस्य भ्रमत्वं बौद्धाः अभिप्रयन्ति प्रत्ययविषयत्वरूपदृश्यत्वहेतुना वस्तुसामान्यस्य मिथ्यात्वं तु अद्वैतिनः स्वीकुर्वंति एवं च भंग्यंतरेण प्रत्ययसामान्यस्य भ्रमत्वकथनात्किमुर्वरितं अप्रामाण्यस्वतस्त्वे इति नास्मिन्नपि विषये उभयोर्मतयोर्वैलक्षण्यं । एतेन प्रामाण्यस्वतस्त्वविषये भेदकथनमप्यपास्तम् । उक्तरीत्या त्वन्मते क्वचिदपि प्रामाण्याभावेन तदीयस्वतस्त्वस्य सति कुड्ये चित्रं कर्मेति न्यायपराहतत्वात् ।

यदपि परमेश्वरसत्तांगीकारानंगीकाराभ्यां भेदकथनं तदप्ययुक्तम् । परमेश्वरस्याद्वैतिमते विशिष्टत्वेन मिथ्यात्वात् मिथ्याभूतेश्वरस्य बौद्धेनापि 'महाब्रह्मणा श्वेतछत्रं धृतं अन्यान्यदेवैः पादुकादिकं धृतं" ब्रह्माअन्तर्ध्यानेन बुद्धस्य पुरतः प्रकट आसीत् इत्यादिग्रंथेन अंगीकृतत्वावगमात् ।

एतेन "इदमेव बौद्धमतात् अद्वैतमते वैलक्षण्यं अद्वैतनिबंधकारा आमनन्ति इत्यपि प्रत्युक्तं वैलक्षण्याभावस्य समर्थितत्वात् ॥

'तदुक्तं तस्मान्न ज्ञानाकारोऽयं किन्तु बाह्यः इत्याद्यप्येतेनैव परास्तं । अद्वैतिमतेऽपि अर्थस्य ज्ञानाकारतायाः (ज्ञानाभेदस्य) विवरणग्रन्थेनोपपादितत्वात् । यदपि "ब्रह्मणि कल्पितो न परमार्थसन्निति सिद्धान्तस्य सुगतमताद्भेद इति तदपि न ज्ञाने कल्पितः न परमार्थसन्निति अंशः सुगतस्यापि सम्मत इति तु सर्वसम्मतं अद्वैत्यभिमतब्रह्मरूपज्ञानस्य बौद्धाभिमतज्ञानात् अवैलक्षण्यस्य उपपादितत्वेन ब्रह्मणीत्यंशेपि भेदासंभवात् यथोक्तं "ब्रह्म ब्रह्मविदां च यत् विज्ञानं विज्ञानविदामिति" ।

"किं बहुना क्षणिकत्वाच्चेति व्याससूत्रात् 'यद्यप्यालय विज्ञानं नाम वासनानामाश्रयत्वेन परिकल्पितं तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत् प्रवृत्तिविज्ञानवत् न वासनानामधिकरणं भवितुमर्हति ।" इति शांकरभाष्यात् २।२।३१ तत्त्वसंग्रहनामके बौद्धग्रंथे नित्यविज्ञानं खंडयित्वा क्षणिकविज्ञानस्थापनाच्च बौद्धाभिमतविज्ञानस्य क्षणिकत्वमायातीति यदुक्तं तत्रेदमवधेयं । क्षणिकत्वाच्चेति सूत्रतच्छांकरभाष्याभ्यां बौद्धाभिमतविज्ञानस्य क्षणिकत्वं सिध्यतीति वदता शुक्लपंडितेन 'सर्वथानुपपत्तेश्च' (ब्रह्म २।२।३२) 'किं बहुना सर्वप्रकारेण यथा यथा (शब्दतोर्थतश्च) अयं वैनाशिकसमयःउपपत्तिमत्त्वाय परीक्ष्यते तथा तथा सिकताकूपवद्विदीर्यत एव न कांचिदप्यत्रोपपत्तिं पश्यामः अतश्चानुपपन्नो वैनाशिकतंत्रव्यवहारः" ( शां: भा. ) "अर्थतश्च, नैरात्म्यमभ्युपेत्यालयविज्ञानं समस्तवासनाधारमभ्युपगच्छन्नक्षरमात्मानमभ्युपैति" (भामती) 'अक्षरं' अविनाशिनं अनादिवासनानामाश्रयत्वात् अक्षरत्वसिद्धिः ( कल्प ) इत्येवंरूपैः सूत्रतच्छांकरभाष्यभामत्यादिग्रंथैः बौद्धाभिमतविज्ञानस्य नित्यत्वमपि सिध्यतीति कथं नालोचितं । तत्र हि स्पष्टमक्षराविनाशिपदाभ्यामनादिवासनाश्रयत्वरूपहेतुना च बोधितं ज्ञानस्य नित्यत्वं ।

न चार्थतश्च नैरात्म्यमभ्युपेत्य आलयविज्ञानं समस्तवासनाधारमभ्युपगच्छन्नक्षरमात्मानमभ्युपैतीति भामतीग्रंथे नैरात्म्यमभ्युपेत्यात्मानमभ्युपैतीति लेखनेन पूर्वापरविरोधः स्फुटमेव प्रतीयत इति वाच्यम् । एतद्भामतीवाक्येन ज्ञानस्य नित्यत्वानभ्युपगमासिद्धेः प्रत्युत 'आलयविज्ञानं अक्षरमभ्युपैति' इति स्पष्टं आलयविज्ञानस्य अक्षरत्व (नित्यत्व) स्यापि अभ्युपगमसिद्धेः।क्षणिकत्वाभ्युपगमादिति शांकरवाक्यगताभ्युपगमपदेन बौद्धैः विज्ञानस्य क्षणिकत्वमंगीक्रियत इति यथा सिध्यति तथा 'अक्षरमभ्युपैति' इति भामतीवाक्यगताभ्युपैतीति पदेनाक्षरत्वं ( नित्यत्वं) बौद्धैरंगोक्रियत इति सिध्यत्येव न चात्र कंचिद्विशेषं पश्यामः नित्यत्वक्षणिकत्वयोर्मतद्वयेपि मिथ्यात्वांगीकारेण भेदसाधकत्वायोगस्योक्तत्वाच्च ।

"एवं क्षणिकत्वमभ्युपेत्य नित्यतामुपैतीति दलाभ्यां बौद्धसिद्धांतहानिरूपदोषप्रदर्शनस्य स्फुटतया अवगमेऽपि बौद्धो नित्यविज्ञानवादी ति भामतीकारो मन्यत इति कथमवाधारि भवतेति' प्रश्न एवानुपपन्नः आलयविज्ञानं अक्षरंआत्मानमभ्युपैतीति आलयविज्ञानस्यनित्यत्वप्रतिपादकभामतोवाक्यस्य अद्वैतमतविमर्शे उदाहृतत्वात् ।

आलयविज्ञानं···अक्षरमात्मानमभ्युपैति' इति भामतीवाक्येन बुद्धभाषितोदानसूत्रेण तत्त्वसंग्रहसंगृहीतवात्सीपुत्रमतेन चोच्छेदरहितनित्यविज्ञानस्यापि बौद्धाभ्युपगतत्वसिद्धेश्च ।

यत्तु 'एवं १६ पृष्ठे 'शून्यपदेन सर्वप्रपंचातीतं भावरूपं किंचित्तत्वं विवक्षितमुताभावरूपं नाद्यः तथा सति वाचोयुक्त्यंतरेण ब्रह्मवाद एवाश्रितः यदि द्वितीयः पक्षः तदा सर्वप्रमाणविरोध' इति ब्रह्मविद्याभरणमुपन्य स्यशून्यवादो ब्रह्मवादश्चैक एवेतिप्रतिपादनमपिआत्मनोऽव्युत्पन्नतासूचकं नहिभावरूपंशून्यपदेनतैरभिधित्सितंयेनैक्यं स्यादिति शुक्लोक्तं तत् तस्यशास्त्रमर्यादानभिज्ञतां ज्ञापयति तथाहि इयं शास्त्रीयमर्यादा यत् परोक्तेसंभावितविकल्पपूर्वकं दोषाद्यभिधानं अन्य-

थापरबुद्धेरप्रत्यक्षतयाऽनुक्तोपालंभरूपता शंक्येत इमामेव रीतिमनुसरद्भिर्ब्रह्मविद्याभरणकारैः शून्यपदेनभावरूपंतत्वंविवक्षितं उताभावरूपं इति विकल्प्य भावरूपत्वपक्षे ब्रह्मवादशून्यवादयोरैक्यं, अभावरूपमितिद्वितीयपक्षे "प्रपंचेप्रमाणैरुपलभ्यमाने शून्यंप्रपंचाभावरूपमितिवक्तुं नशक्यत इति दूषणमुक्तं तत्रचयथाभावरूपमितिप्रथमपक्षे अद्वैतवाद शून्यवादयोरैक्यमापतितं अनुमतं च तथा शून्यं प्रपंचाभावरूपमिति द्वितीयपक्षेऽपि अद्वैतिभिर्ब्रह्मणोऽपिप्रपंचाभावरूपतायाअद्वैतसिद्धया दिग्रंथैरंगी कृतत्वावगमाच्छून्यब्रह्मणोरभेदएवेत्युक्तं अद्वैतमतविमर्शकृता "तत्र न शून्यस्यभावरूपत्वं तैरभिधित्सितं येनैक्यंस्यादिति" कथनमसंगतमेवेति ।

यदपि हाराणभट्टाचार्येण द्वितीयप्रकाशे १६ पृष्ठे प्रभाकरमते यथाभूतलवृत्तेर्घटाभावस्य भूतलस्वरूपत्वेपिभूतलस्यासत्त्वं (शून्यत्वं) नांगीक्रियते किंतुभूतलस्याभावरूपतयाप्रतीतिमात्रं तथासत्स्वरूपे ब्रह्मणिवर्तमानस्य प्रपंचाभावस्य ब्रह्मस्वरूपत्वेपि ब्रह्म शून्यरूपमित्यंगीकृतमिति कथं भवेत् इति ।

तदप्ययुक्तं यतः अभावः शून्यरूप इति ब्रह्मणः प्रपंचाभावरूपत्वाच्छून्यता नोच्यते किंतु यथा शून्यस्य भावरूपत्वे ब्रह्मणोऽपि भावरूपत्वादितरांशस्य च साम्याच्छून्यवादब्रह्मवादयोरैक्यं ब्रह्म विद्याभरणकृताऽनुमतं तथा शून्यस्य प्रपंचाभावरूपत्वेऽपि ब्रह्मणः प्रपंचाभावरूपतायाः शून्यवादिभिरिवाद्वैतिभिरप्यंगीकारात् इतरांशस्य च साम्यात्तत्पक्षेऽपि शून्यवत्प्रपंचाभावरूपत्वप्रयुक्तमेव शून्यब्रह्मवादयोरैक्यं प्राप्तमित्युक्तं नत्वभावरूपत्वप्रयुक्तं शून्यरूपत्वमित्येवमस्मदीयमभिप्रायमबुद्ध्वैव अभावस्वरूपत्वप्रयुक्तं शून्यत्वमुक्तं भूतलस्य घटाभावस्वरूपत्वेऽपि शून्यत्वाभाववत् ब्रह्मणः प्रपंचाभावरूपत्वेऽपि शून्यत्वाभाव इति हाराणभट्टोक्तिः अस्मद्ग्रन्थार्थाज्ञानमूलिकेति एवं हाराणोक्तदिशा यथा भूतलादेर्घटाभावरूपतानसत्स्वरूपतां विघट-

यति तथा शून्यस्यापि प्रपंचाभावरूपतासतस्वरूपतां न विघटयतीति प्रपंचाभावरूपसत्स्वरूपब्रह्माभेदः कथं शून्यस्य वारयितुं शक्यते हाराणादिभिरिति ।

यत्तु "किंच बौद्धानां विज्ञानतत्त्वमुपनिषदज्ञेयम् अद्वैतिनां तूपनिषज्ज्ञेय मित्यप्येको विशेष इति तन्न--

अद्वैतिभिः विज्ञानस्य निर्विशेषत्वांगीकारेण उपनिषज्ज्ञेयत्वरूपविशेषोक्त्ययोगात् ।

निर्विशेषविज्ञानरूपब्रह्मणः उपनिषज्ज्ञेयत्वासंभवस्योक्तत्वाच्च तुष्यत्विति न्यायेन उपनिषदा विज्ञानविषयकज्ञानं जन्यत इत्यङ्गीकृतावपि तादृशज्ञानस्य बौद्धाभिमतविज्ञानव्यावर्तकधर्माविषयकत्वेन तज्ज्ञानेन अद्वैतिनां विज्ञानं विषयीक्रियते न बौद्धानां विज्ञानं इत्यत्र नियामकाभावेन बौद्धाद्वैत्यभिमतविज्ञानयोः उपनिषज्ज्ञेयत्वाज्ञेयत्वरूपविशेषस्य वक्तुमशक्याच्च ।

यत्तु 'ब्रह्मणो ज्ञेयत्वमज्ञेयत्वंच प्रतिपादितमितितयोः सामंजस्यस्य चिन्तनीयत्वादिति तत्तुच्छं एकस्मिन् ह्रदे आरोपितवह्निवह्न्यभावबोधकवाक्ययोरिव अद्वैतिमतरीत्या ज्ञेयत्वस्य मिथ्यात्वेन ज्ञेयत्वाज्ञेयत्वबोधकयोरसामंजस्याप्रसक्तेः तत्सामंजस्यस्य चिंतनीयत्वोक्तेरयुक्तत्वात् ।

ज्ञेयत्वाज्ञेयत्वयोः सामंजस्यार्थं तथाहि घटाकारान्तःकरणवृत्त्या घटावच्छिन्नचैतन्यनिष्ठाविद्यानाशे जाते घटाकारवृत्तौयः चित्प्रतिभासः तेन घटो भासते...ब्रह्मणि तु ब्रह्माकारवृत्त्याऽज्ञाननाशे स्वप्रकाशरूपतया स्वतएव ब्रह्मणो भानमिति न तदर्थं बुद्धिस्थचिदाभासस्योपयोगः...एतदुक्तं भवति फलव्याप्यत्वं न ब्रह्मणः किंतु वृत्तिव्याप्यत्वमेव तथा च ब्रह्मणस्तत्र तत्र श्रुतावज्ञेयत्वकथनं फलव्याप्यत्वभावाभि प्रायेण ज्ञेयत्वकथनं च वृत्तिव्याप्यत्वाभावाभिप्रायेणेतिब्रह्मणो ज्ञेयत्वमज्ञेयत्वं चोभयं श्रुतौ प्रतिपाद्यमानंसंगच्छतेइति यदुक्तं तन्न घटाकारान्तः करणवृत्तेः, घटाव-

च्छिन्नचैतन्यस्य, (घटभ्रमाधिष्ठानचैतन्यस्य) ब्रह्मरूपतच्चैतन्येऽविद्यायाः तन्नाशस्य, घटाकारवृत्तौ चित्प्रतिभासस्य, तेन घटावभासस्यच, अप्रामाणिकत्वेन स्वगोष्ठीनिष्ठप्रलापरूपत्वात् तेन ज्ञेयत्वाज्ञेयत्वयोः सामंजस्यासंभवात्

ब्रह्मणो निराकारत्वेन 'ब्रह्माकारवृत्या अज्ञाननाशे' इत्युक्तेरत्यंतायुक्तत्वाच्च वृत्तिविषयत्वविशिष्टस्यच ब्रह्मण अद्वैतिमते मिथ्यात्वस्याद्वैतसिद्ध्यादावुक्तत्वेन मिथ्याभूतविशिष्टब्रह्मणःज्ञेयत्वेपि शुद्धब्रह्मणःज्ञेयत्वासिद्ध्याज्ञेयत्वाज्ञेयत्वाभ्यां बौद्धाद्वैतिविज्ञानयोः भेदासंभवाच्च-

त्वदभिमतफलव्याप्यत्वे प्रमाणाभावेन शशविषाणवत् असत्वाच्च यत् उक्तार्थे बुद्धितत्स्थचिदाभासौ इत्यादिश्लोकोदाहरणं तन्न युक्तं अद्वैतिवाक्यत्वेन असंप्रतिपन्नप्रमाणभावत्वात्-

## अद्वैतिमते वर्णाश्रमधर्मेश्वराद्यभावः ।

ब्राह्मणत्वस्य रक्षणेन रक्षितः स्याद्वैदिको धर्म इति वर्णधर्मसत्ता प्रतिपादनात् शालिग्रामपूजायाः वर्णाश्रमधर्माचरणस्य च शांकर भाष्ये तत्र तत्र प्रतिपादितत्वात् । तथा हि 'अथवा जीवपुरे एवास्मिन् ब्रह्म सन्निहितमुपलक्ष्यते यथा शालग्रामे विष्णुः'

[इति शाङ्करभाष्यम् १।३।१४।]

'यथा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यासः' इति शाङ्करभाष्यम् ॥ ३।३।९

'सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात्सत्यत्वोपपत्तेः तस्मात्प्राग्ब्रह्मात्मताप्रतिबोधादुपपन्नःसर्वो लौकिको वैदिकश्च व्यवहारः'

(इति शाङ्करभाष्यम् २।१।१४)

'तेन शास्त्रादृते धर्माधर्मविषयं विज्ञानं न कस्यचिदपि जायते'

(इति शाङ्करभाष्यम् ३।१।२५)

'स्मृतिरपि वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टकुलजातिरूपायुःश्रुतवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' ( इति शाङ्करभाष्यम् ३।१।८ )

'न हि सदाचारहीनः कश्चिदधिकृतः स्यात्-आचारहीनं न पुनन्ति वेदा' इति स्मृतिभ्यः' ( इति शाङ्करभाष्यम् ३।१।१० )

"देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।

लौकिकं (वैदिकं तद्वत्) तद्वदेवेदं प्रमाणं त्वात्मनिश्चयातिति ॥

स्वाप्नव्यहारस्येव प्राक्प्रबोधात्"

इति शांकरभाष्यवाक्यान्युदाहृत्य सूर्यनारायणहाराणभट्टमहेश्वरप्रभृतयः शंकराचार्यः वेदप्रामाण्यमंगीकरोति ईश्वरस्यास्तित्वं मन्यते वर्णाश्रमधर्मानंगीकरोति शालग्रामपूजां स्वीकरोति एवं सर्ववैदिकधर्मानंगीकरोति इति प्रदर्श्य अद्वैतमतविमर्शकारीयं वर्णधर्माधर्म देवतादीनद्वैतिनः यतो नांगीकुर्वंति अतस्तेऽवैदिका इति कथनं वंचनामात्रं परेषां नेत्रेषु धूलिप्रक्षेपमात्रमित्याद्दि यदवोचन् ततू शंकरभाष्यार्थाज्ञानमूलकं तथा हि पूर्वोदाहृतशांकरवाक्यैः 'सत्यतोपपत्तेः' सत्यत्वाभिमानोपपत्तेरिति भामतीवाक्येन "ज्योतिष्टोमादिश्रुतिबोधितानुष्ठानात्फलसिद्धिः स्वाप्नश्रुतिबोधितानुष्ठानप्रयुक्तफलसंवादतुल्या।" "वस्तुतस्तु श्रुतिमात्रप्रतीत वियदादिसर्गतत्क्रमादेरिव श्रुतिमात्रप्रतीतस्वर्गादिफलस्याप्यसत्त्वमेवाभिप्रेतम् । कल्पकाभावस्यतुल्यत्वादिति बोध्यम् । इति सिद्धान्तलेशसंग्रहादिवाक्यैश्च ।

देहात्म्यैक्यमृगतृष्णारज्जुसर्पादिवत् वेदतत्प्रामाण्येश्वरब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमभस्मतद्धारणतत्फलधर्माधर्मादिसर्वजगतःअसत्वं ( कालत्रयेऽप्यभावः ) तद्विषयकज्ञानमपिस्वाप्नपदार्थज्ञानवत् अप्रमाणं तज्जनकाः वेदादयोऽप्यप्रमाणं इत्येव सिध्यति इति कथमद्वैतिनःईश्वर

विषये वेदप्रामाण्ये शास्त्रे सदाचारे चोत्कटश्रद्धावंतः परमास्तिका इति वक्तुंशक्यते वेदतत्प्रामाण्यादीनां अनृतत्वं वदंतोऽपि यदि परमास्तिकाः भवेयुस्तर्हि के नास्तिका लोके इत्येतत् शुक्लहाराणमहेश्वराद्यैः कथ्यतां

प्रमाणानां व्यावहारिकवस्तुविषयकत्वं नास्ति इति अद्वैतिभिरेवव र्णितं च "प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्वमिदमित्येव प्रवर्तंते। अतात्विकत्वं तु तद्गोचरस्यान्यतो बाधकादवगंतव्यम्। न पुनः सांव्यावहारिकं नः प्रामाण्यं न तु तात्विकमित्येव प्रवर्तन्ते " इत्यादि ग्रंथेषु।

तथा व्यावहारिकविषयस्यशुक्तिरूप्यादिवत् कदाचिद्बाध्यत्वाभ्युपगमात्बाध्यविषये च व्यावहारिकंप्रामाण्यतिति व्यवहारस्य अद्वैतिपरिभाषामात्रसिद्धत्वादित्यादिवाक्यैः' व्यावहारिकस्यापिबाध्यत्वेनतद्विषये व्यावहारिकप्रामाण्योक्तेरप्रामाण्यपर्यवसायित्वमप्युक्तं तेन च व्यावहारिकंसत्वंअसत्वमेवेति व्यावहारिकप्रामाण्यं अप्रामाण्यमेवेति च सिद्धम्।

तथा च भट्टपादोक्तरीत्या नास्तिक्यपरिहारार्थं वंचनामात्रमेव बौद्धवत् व्यावहारिकपारमार्थिकसत्यद्वयकल्पनमद्वैतिनां।

किंच व्यवहारे भट्टनय इति आत्मनो भट्टचरणशरणत्वमभ्युपेत्य पुनस्तद्दूषितामेव प्रक्रियामाश्रयितुं कथं न लज्जंते तथा हि कुमारिलविरचिते श्लोकवार्तिके 'कर्मभ्यः फलसंबंधः पारलौक्यैहलौकिके। सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु। यदा संवृतिसत्येन सर्वमेतत्प्रकल्प्यते ॥ ज्ञानमात्रेऽपि कस्माद्वो वृथाऽऽग्राहेऽर्थकल्पने। सत्यं चेत्संवृतिःकेयं मृषाचेत्सत्यताकथम्। सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः। तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः। वंचनार्थमुपन्यासो लालावक्त्रासवादिवत्। नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ॥ कल्पनाऽपित्वभिन्नस्यनैवनिर्वस्तुके भवेत्। तस्माद्यन्नास्तिनास्त्येवयत्त्वस्तिपरमार्थतः। तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना। नहि स्वप्नसुखाद्यर्थं धर्मं कश्चित्प्रवर्तते इति ॥

# द्वैतवादस्यावैदिकत्वनिरासः।

द्वैतवादिनो हि विष्णोः सर्वोत्तमत्वसर्वेशत्वस्वतंत्रत्वादिगुणव त्त्वं जीवब्रह्मणोर्भेदं विश्वस्य सत्यतां चेत्यादीनि तत्त्वान्यंगीकुर्वंति तत्र विष्णुसर्वोत्तमत्वं तु।

'अग्निर्वै देवानामवमो विष्णुः परमः तदंतरेण सर्वा अन्याः देवताः'

'पुरुषान्न परं किंचित्सा सा काष्ठा सा परा गतिः'

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं' इत्यादिषु वेदेषु।

'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः।'

'मत्तः परतरं नान्यत्किंचिदस्ति धनंजय।'

'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इत्यादिगीतासु

'अधिकं तु भेदनिर्देशात्' इत्यादिषु सूत्रेषु च स्पष्टं प्रतिपाद्यते

एवं विष्णोः पुरुषोत्तमत्वस्योक्तगीतावाक्येन वेदप्रथितत्वोक्त्या वैदिकत्वं कंठत एवोक्तमिति नात्रावैदिकत्वशंकालेशोपि उदाहृतानां 'अग्निर्वै' इत्यादि श्रुतीनां विष्णुसर्वोत्तमत्वप्रतिपादकत्वं शंकराचार्याणामप्यनुमतमित्यवगम्यते आनंदगिरिविरचितशंकरविजयीयद्वादशप्रकरणविष्णुसहस्रनामशांकरभाष्यादिभिः।

सर्वेशत्वस्वतंत्रत्वसर्वज्ञत्वादिभिर्गुणैः सर्वोत्तमः सत्यकामः सत्यसंकल्प ईश्वरः इत्यनेन शंकराचार्या अपि विष्णोः सर्वोत्तमत्वं प्रतिपादयंतीति नात्र बहु वक्तव्यं।

एवं जीवब्रह्मणोर्भेदोपि।

"यो विज्ञा तिष्ठन् विज्ञानादंतरोयं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमंतरो यमयत्येषतआत्मांतर्याम्यमृतः ( बृ )

य आत्मनि तिष्ठन् ( बृ )

पृथगात्मानं प्रेरितारं च मत्वा ( श्वे ) इत्यादिभिर्वेदैः

'उत्तमः पुरुषस्त्वन्यः।'

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' 'इत्यादि गीतावाक्यैः'

'शारीरश्चोभयेपि हि भेदेनैनमधीयते' 'भेदव्यपदेशात्' भेदव्यपदेशाच्चान्यः अनुपपत्तेस्तु न शारीरः इत्यादिसूत्रैश्च प्रतिपाद्यमानः कथमवैदिकताशंका विषयतामपि प्राप्नुयात्।

उदाहृतानां प्रमाणानां भेदपरता तु ब्रह्मसूत्रशांकरभाष्यादितः स्पष्टैवेति।

ब्राह्मणवर्णाश्रमयज्ञवेददेवतादिरूपजगतः सत्यत्वमपि।

तदेतत्सत्यं (मुं०) विश्वं सत्यं (ऋ०) 'यथातथ्यतोर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः' जन्माद्यस्ययतः 'इत्यादिश्रुतिसूत्रैः' स्पष्टं प्रतिपाद्यते व्याख्यातं च सायणेन 'सत्यं' अनारोपितमिति विश्वं सत्यमिति वाक्यस्थं सत्यपदं अतः तद्वैदिकता स्पष्टैव।

'असत्यमप्रतिष्ठंते जगदाहुरनीश्वरमि' तिगीतावाक्येनासत्यत्ववादिनिंदया चायमेवार्थो दृढीक्रियते इति न द्वैतवादस्य वैदिकत्वेऽस्माभिः प्रयतितव्यं।

यत्तु "प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधादिति सूत्रेण विरुद्धं च तथाहि अनेन सूत्रेण ब्रह्मण उपादानकारणत्वं निमित्तकारणत्वं च प्रतिपाद्यते माध्वेन तु ईश्वरोनिमित्तकारणमेव नतूपादानकारणमिति प्रतिपाद्यते तथा च सूत्रविरोध" इति।

तत्तुच्छं अस्मिन्सूत्रे उपादानकारणत्वबोधकपदाभावात् ब्रह्मणः उपादानकारणत्वासंभवाच्च तथा हि उपादानकारणत्वं नाम विकारिकारणत्वं (परिणामिकारणत्वं) तच्च निर्विकारोक्षरः शुद्धः इत्यादि श्रुत्या ब्रह्मणः निषिद्धम् इति।

न च उपादानकारणं द्विविधं परिणाम्युपादानकारणं विवर्तोपादानकारणं चेति ब्रह्मणः निर्विकारत्वेन परिणाम्युपादनत्वासंभवेपि विवर्तोपादानत्वं संभवतीतिवाच्यं विकारिकारणत्वा (परि-

णामित्वा ) तिरिक्तोपादनकारणाताया एवाभावात् नहि रजतभ्रमाधिष्ठानभूता शुक्तिः रजतस्य उपादानकारणमिति लौकिकाः परीक्षका अपि जानंति वदंति वा अद्वैतिमते अंगीकृतनिर्विशेषाद्वितीयब्रह्मणः भ्रमाधिष्ठानत्वरूपविवर्तोपादनत्वासंभवाच्च ।

तथाहि भ्रमोत्पत्तौ भ्रांत्याश्रयःपुरुषः भ्रांत्यधिष्ठानं (भ्रांतिविशेष्यं) च आवश्यकं भ्रांतिविशेष्ये च सामान्यधर्मः विशेषधर्मः आरोप्यमाणवस्तुसादृश्यं च आवश्यकं भ्रांतपुरुषस्य अधिष्ठाने सामान्यज्ञानं विशेषधर्माज्ञानं आरोप्यमाणवस्तुसादृश्यज्ञानं च आवश्यकं सामान्यज्ञानाद्यर्थं देहेंद्रियादिकं च आवश्यकं दृष्टं हि शुक्तौ रजतभ्रमस्थले अधिष्ठानं शुक्तिः भ्रान्तश्च देवदत्तः अधिष्ठानभूतायां शुक्तौ इदंत्वरूपसामान्यधर्मः शुक्तित्वादिरूपो विशेषधर्मः चाकचक्यादिना रजतसादृश्यं च भ्रांत्याश्रयस्य देवदत्तस्य शुक्तौ इदंत्वज्ञानं शुक्तित्वाज्ञानं चाकचक्यज्ञानं च । तज्ज्ञानोपयुक्तेन्द्रियाणि चेति शुक्तौ रजतभ्रमः संभवति ब्रह्मणि जगतः भ्रमे ( अध्यासे ) नैतेषु कारणेषु एकमप्यस्तीति कथं भ्रमः ब्रह्मणि संजाघटीति

तथा हि "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इत्युक्तरीत्या अद्वैतिमते निर्विशेषब्रह्मातिरिक्तस्य कस्यचिदपि वस्तुनः अभावात् ब्रह्मैव अधिष्ठानं भ्रांतश्चेति वक्तव्यं तस्मिन् निर्धर्मके ब्रह्मणि च अधिष्ठानत्वप्रयोजकानि सामान्यधर्मविशेषधर्मसादृश्यानि न संति तथा भ्रांतत्वप्रयोजकानि सामान्यधर्मज्ञानविशेषधर्माज्ञानसादृश्यज्ञानतत्प्रयोजकदेहेंद्रियाणि च न संत्येवेति अद्वैत्यभिमतं ब्रह्म अधिष्ठानं आश्रयश्च भवितुं निर्हतीतिःनाद्वैतिमते भ्रमस्य संभवः ।

एवं रीत्या भ्रमो न संभवतीति नास्माभिरेव उच्यते किंतु अद्वैतिभिरपि भामतीकारादिभिः अनेकदोषयुक्तत्वात् भ्रमो न संभवति इति स्वग्रन्थे उक्तं तथा हि तद्वाक्यानि

"युक्तं हि पुरोवर्तिनि द्रव्ये द्राघीयसि सामान्यरूपेणालोचिते

विशेषरूपेणाग्रहीते विशेषान्तरसमारोपणम्, इह तु प्रकाशात्मनो निर्विशेषसामान्यस्यापराधीनप्रकाशस्य नागृहीतमस्ति किंचिद्रूपमिति कस्य विशेषस्याग्रहे किं विशेषान्तरं समारोप्यताम् ? तस्माद्ब्रह्मणो जीवभावारोपासंभवाज्जीवो जीवो ब्रह्म च ब्रह्मेति तत्त्वमसीति प्रतीकोपदेश एवेति प्राप्तम् । एवं प्राप्तेऽभिधीयते..................

निरंशस्यापि चानाद्यनिर्वाच्याविद्यातद्वासनासमारोपितविविधप्रपंचात्मनः सांशस्येव कस्यचिदंशस्याग्रहणाद्विभ्रम इव परमार्थस्तु न विभ्रमो नाम कश्चिन्न च संसारो नाम, किंतु सर्वमेतत्सर्वानुपपत्तिभाजनत्वेनानिर्वचनीयमिति युक्तमुत्पश्यामः । तदनेनाभिसंधिनोक्तम्—भाष्ये यद्येवं प्रतिबुद्धोसि नास्ति कस्यचिदप्रतिबोध इति । अन्येऽप्याहुः—"यद्यद्वैते न तोषोस्ति मुक्त एवासि सर्वदा" इति।

तथा च अद्वैतमते भ्रमासंभवात् ब्रह्मणः विवर्तोपादानकारणत्वं वक्तुमशक्यमेवेति नेदं सूत्रं ब्रह्मणः जगदुपादानत्वबोधकमिति न माध्वमते एतत्सूत्रविरोधः इति ।

एतेन ( अध्यासस्यासंभवेन ) हाराणचिन्नमहेश्वरादीनां विवर्तवादवर्णनमप्यपास्तं ।

यच्च श्रुतिस्मृतिविरोधश्च शांकरभाष्यादौ शतशो निरूपित इति किञ्चिन्मयापि प्रदर्श्यते—तथा हि—'तत्त्वमसि' 'अहं ब्रह्माऽस्मि' 'नेह नानास्ति किंचन' इत्याद्याः श्रुतयः इति तन्न ।

शांकरभाष्यभामतीकल्पतरुपरिमलाद्यनेकाद्वैतिग्रंथेषु शतशः इत्येव किं सहस्रशः श्रुतिसूत्रगीतावाक्यानां भेदबोधकतायाएव वर्णनात् भेदप्रतिपादकतया तैरुक्तानां वाक्यानां मध्ये कानिचिद्वाक्यानि प्रदर्श्यन्ते । अन्यानि वाक्यानि तद्ग्रन्थैरेवावलोकनीयानि

तथा हि * "न केवलमुपनिषदः ( तत्त्वमसीत्याद्याः ) ब्रह्मैकत्वं

---

* यद्यपि इदं पूर्वपक्षवाक्यं तथापि अभेदप्रबोधकवाक्यानां अभावेन बाधकाभावात् भेदबोधकवाक्यैर्भेदः सिध्यत्येवेति ।

प्रतिपादयन्त्यः स्वार्थविघातं कर्मकाण्डप्रामाण्यविघातं च कुर्वन्ति । प्रत्यक्षादिनिश्चितभेदप्रतिपत्त्यर्थप्रमाणैश्च विरुद्धयन्ते । तस्मादप्रामाण्यमेवोपनिषदां अन्यार्थता वाऽस्तु न त्वेव ब्रह्मैकत्वप्रतिपत्त्यर्थता, इत्यादि शांकरभाष्ये कर्मकाण्डस्य समस्तस्य भेदपरत्वं उपनिषत्स्वपि तत्त्वमस्यादिपंचषवाक्यानि परित्यज्य सृष्ट्युपासनादिप्रतिपादकभागस्य भेदपरत्वं उक्तम् ।

तथा 'सुषुप्त्युत्क्रान्त्योर्भेदेन' व्यपदेशादित्यनुवर्तते । अयमभिसंधिः किं संसारिणोऽन्यः परमात्मा नास्ति, तस्मात्संसार्यात्मपरं 'योऽयं विज्ञानमयः प्राणेषु' इति वाक्यम् । आहोस्विदिह संसारव्यतिरेकेण परमात्मनोऽसंकीर्तनात्संसारिणश्चादिमध्यावसानेष्ववमर्शनात् संसार्यात्मपरं । न तावत्संसार्यतिरिक्तस्य तस्याभावः । तत्प्रतिपादका हि शतशःआगमाः 'ईक्षतेनाशब्दं' 'गतिसामान्यात्' इत्यादिभिः सूत्रसन्दर्भैरुपपादिताः । न चात्रापि संसार्यतिरिक्तपरमात्मसंकीर्तनाभावः । सुषुप्त्युत्क्रान्त्योः तत्संकीर्तनात् । न च प्राज्ञस्य परमात्मनो जीवाद्भेदेन संकीर्तनं सति संभवे राहोः शिर इतिवदौपचारिकं युक्तम् । न च प्राज्ञशब्दः प्रज्ञाप्रकर्षशालिनि निरूढवृत्तिः कथंचिदज्ञविषयो व्याख्यातुमुचितः । न च प्रज्ञाप्रकर्षोऽसंकुचद्वृत्तिर्विदितसमस्तवेदितव्यात् सर्वविदोऽन्यत्र संभवति । न चेत्थंभूतो जीवात्मा । तस्मात् सुषुप्त्युत्क्रान्त्योर्भेदेन जीवात्प्राज्ञस्य परमात्मनो व्यपदेशात् । इति भामतीग्रंथे तत्प्रतिपादका ( संसार्यतिरिक्तपरमात्मप्रतिपादकाः ) शतशः आगमाः सन्तीति उद्घोषितं ।

'नहि सकलजीवजडविलक्षणमेकमीश्वरं प्रतिपादयतामेतावतामुपनिषद्वाक्यानामतिक्लिष्टनयनं युक्तमिति कल्पतरुपरिमलेऽपि जीवजडविलक्षणेश्वरप्रतिपादकानि वाक्यानि अनेकानि सन्ति इति उक्तम् ।

तत्त्वमसीत्यादिवाक्यानामपि अखंडार्थबोधकतां ( 'चित्' इति

अभेदाविषयकज्ञानजनकतां ) प्रदर्श्य अभेदे प्रमाणत्वाभावोऽपि अद्वैतिभिः प्रदर्शितः ।

सखंडार्थबोधकत्वेऽपि त्वंपदादिबोध्यस्य अल्पज्ञत्वादिविशिष्ट-जीवस्य तत्पदादिबोध्यसर्वज्ञत्वादिविशिष्टपरमात्मनाः अभेदः वक्तुं न शक्यते इत्यपि प्रदर्शयित्वा मुख्यया वृत्त्या अद्वैतप्रतिपादकानि वेदवाक्यान्येव न सन्तीति च प्रदर्शितम् ।

लक्षणांगीकारेपि नैक्यसिद्धि, ऐक्यबोधः यथा स्यात्तथा लक्षणा कर्तव्या उत भेदबोधः यथा स्यात्तथा लक्षणा कर्तव्येत्यत्र नियामकाभावात् । न केवलं नियामकाभावः प्रत्युत श्रुतिसूत्रगीता-द्यनेकप्रमाणविरुद्धत्वेन लक्षणया अभेदार्थत्वस्य वक्तुमशक्यत्वेन श्रुत्याद्यनुरोधेन यथा जीवेश्वरयोर्भेदबोधः स्यात् तथैव लक्षणायाः कर्तुं शक्यत्वेन श्रुत्यादिभिः भेदबोधः यथा स्यात् तथैव लक्षणा कर्तव्येत्यत्र नियामकसद्भावाच्च ।

अद्वैतविषये उपक्रमादिषड्विधलिंगानि संति इतितु न युक्तं प्रतिज्ञामात्रस्य अर्थासाधकत्वात् । वस्तुतः उपक्रमादीनां अभावाच्च । एकैकं वाक्यं धृत्वा यद्युपक्रमादयः प्रदर्श्यन्ते तदा विचारयामः ।

यत्तूच्यते अद्वैतिभिः भेदः प्रत्यक्षादिसिद्ध इति तत्प्रतिपादकत्वे अपूर्वत्वाप्राप्त्या :अनधिगतार्थगंतृप्रमाणमिति प्रमाणलक्षणाभावेन अप्रामाण्यापातेन अपूर्वत्वार्थं न भेदे श्रुतीनां तात्पर्यं वक्तव्यम् किंतु अनुवादकत्वं एवेति तत्तुच्छम् ।

अद्वैतिमतेऽपि अखंडार्थत्वेन चित् इत्येतावन्मात्रबोधजनकतया चितः स्वप्रकाशत्वेन तद्बोधकश्रुतीनां अनधिगतार्थबोधकत्वाभावेन अप्रामाण्यापरिहारात् ।

न च स्वप्रकाशत्वं नाम इतरावेद्यत्वं न तु स्वेन सिद्धत्वं अतः सिद्धत्वाभावात् अनधिगतार्थगंतृत्वरूपं प्रामाण्यं न भग्नमिति वाच्यम् तर्हि इतरावेद्यत्वेन तत्त्वमस्यादिवाक्यजन्यज्ञानविषयोऽपि न

स्यादिति चिद्विषये· तत्त्वमस्यादिवाक्यानां प्रामाण्यासंभवात्।

तत्त्वंपदयोर्लक्षणया चिदर्थकत्वमात्रं स्वीकृत्य चित् चिदसि इति बोधांगीकारेऽपि घटं घटत्वेन पटं पटत्वेनेव चितं चित्त्वेन सर्वे जानंतीति अधिगतार्थबोधकत्वस्यैव प्राप्त्या प्रामाण्यहानेर्दुर्वारत्वात्।

तत्त्वावेदकत्वं ( विद्यमानार्थविषयकबोधजनकत्वं ) खलु प्रामाण्यं अतत्त्वावेदकत्वं ( अविद्यमानार्थविषयकबोधजनकत्वं ) तुअप्रामाण्यं अतः अधिगतार्थबोधकत्वेन अप्रामाण्यकथनं अयुक्तमेव परन्तु तदर्थज्ञानवतः कस्यचित् श्रोतुः यथाकथंचित् अनुपादेयत्वं तु स्यात् तदर्थाज्ञानवतः श्रोतुः उपादेयमपि भविष्यत्येव।

वस्तुतस्तु कस्यचिद्देशांतरवर्तिपुरुषाज्ञानिनः तत्प्रतियोगिकभेदज्ञानं स्वस्मिन् न भवति इति सर्वानुभवसिद्धं अयोध्यायां एकः पुरुषो मया दृष्ट इति वाक्येन देशान्तरवर्तिनि पुरुषे ज्ञातेऽपि अहमेव तदा अनेन अयोध्यायां दृष्टः मामेव अयं अयोध्यास्थपुरुषतया ब्रवीति इति शंकया यावत् स्ववृत्तिलक्षणविरुद्धलक्षणवत्तया न बोध्यते तावत् अयोध्यास्थपुरुषप्रतियोगिकभेदं स्वात्मनि न जानाति इत्यपि अनुभवसिद्धम्। तथा वेदेन स्वस्ववृत्त्यल्पज्ञत्वादिलक्षणविरुद्धसर्वज्ञत्वादिलक्षणयुक्तं परमात्मानं यावन्न जानाति तावत् स्वस्मिन् तत्प्रतियोगिकभेदं न जानातीति नाहमीश्वरः इति भेदप्रत्यक्षं, सर्वज्ञत्वादिरूपविरुद्धधर्मबोधकं तत एव जीवेश्वरभेदग्राहकं च वेदं अपेक्षते इति न केवलप्रत्यक्षेण जीवेश्वरभेदसिद्धिरिति। न वेदः प्रत्यक्षगृहीतभेदबोधक इति न वेदस्यापूर्वत्वहानिः। एवं च सर्वाणि वेदवाक्यानि भेदबोधकान्येव।

## ब्रह्मसूत्राण्यपि भेदबोधकानि।

तथा हि "ननु जीवब्रह्मणोरैक्यं न क्वापि सूत्रकारो मुखतो वदति किंतु सर्वत्रभेदमेवातो नैक्यमिष्टं तत्राह 'प्रतिपाद्यं त्विति' प्रतिपाद्यं

तु शास्त्रार्थमात्मैकत्वमेव दर्शयति शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यादिना आदिपदं आत्मेति तूपगच्छंति ग्राहयंति चेतिसूत्रसंग्राहकं' इत्यादि शंकरभाष्यतद्व्याख्यानग्रंथसंदर्भेण द्वित्राणामेव सूत्राणां अभेदपरतावर्णनात्तदितरसूत्राणां भेदपरता भाष्यकृत्प्रभृतीनामनुमतैव द्वित्राण्यपि तानि सूत्राणि अभेदबोधकपदाघटितत्वेन अध्याहारादिना तद्बोधकतायाश्चातिप्रसंजकत्वेन परःशतश्रुतिसूत्रसमधिगतभेदविरोधेन च नाभेदबोधकानि प्रत्युत ज्ञातृज्ञेयभावोपदेश्योपदेशकभावादिबोधनेन भेदमेवावगमयंति ।

एवं व्यासोपदिष्टसूत्राणां द्वैतवाक्यात्मनां शिवे ।
अद्वैतमेव सूत्रार्थं प्रामाण्येन करिष्यति ॥
अविमुक्ते समासीनं व्यासं वाक्यैर्विजित्य च ।

इत्येवंरूपात् प्रमाणत्वेन त्वदभिमतात् शिवरहस्यग्रंथादपि व्याससूत्राणां द्वैतबोधकत्वं शंकराचार्याणां श्रीव्यासाभिमतार्थविरुद्धार्थप्रतिपादकत्वं च सिद्ध्यति । तदेतदभिप्रेत्य महामहोपाध्यायबिरुदांकितैरद्वैतशास्त्रमर्मज्ञैः रामसुब्बाशास्त्रिभिर्मुक्तकंठमुक्तम् ।

शास्त्राणां भेद एव श्रुतिशिखरगिरामागमानां च निष्ठा ।
साकं सर्वैः प्रमाणैः स्मृतिनिकरमहाभारतादिप्रबंधैः ॥
तत्रैव व्याससूत्राण्यकुटिलविधया भांति तात्पर्यवंति । इत्यादि ॥

---

## एवं गीतापि भेदपरैव ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६।१६ ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १६।१७ ॥

यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः।

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ १६।१८॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमं॥ १६।१९॥

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय॥ ७।७॥

न त्वत्समोऽस्त्यभ्यधिकः कुतोन्यः॥ ११।४३॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति॥ १८।६१॥

इत्यादिभिः श्लोकैः जीवपरमात्मनोर्भेदः परमात्मनः सर्वोत्तमत्वं च कथ्यते निर्घंते 'च 'ईश्वरोहऽमहं भोगी' 'असत्यमप्रतिष्ठंते' इत्यादिना जीवेश्वराभेदं जगन्मिथ्यात्वं च वदंत इति गीतापिभेदपरैव न जीवेश्वरयोरैक्यबोधिका न वा जगतः मिथ्यात्वबोधिका च।

यदुक्तं "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इत्यादीनि वाक्यानि जीवेश्वरयोरैक्यबोधकानीति चिन्नस्वामिहाराणचंद्रप्रभृतिभिः तन्न युक्तम्।

यतः वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति वाक्यं न जीवेश्वरैक्यबोधकं।

तथा हि 'सर्वं खल्विदं ब्रह्म' तज्जलानितिशांत उपासीत'''सर्वकर्मा सर्वकामः सर्वगंधः इति (छां. ३-४-१४) मंत्रार्थकथनबेलायां धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ इति गीतावाक्ये ब्रह्मणः कामरूपत्वोक्तेः तदनुसारेण सर्वकाम इति पदस्य सर्वश्चासौ कामश्च सर्वकाम इति कर्मधारयसमासं कृत्वा ब्रह्मणः कामाभेद एव वक्तव्य इत्याशंक्य कामस्य कार्यत्वेन पुरुषाधीनत्वेन च (पारतंत्र्येण) ईश्वरस्य कामाभेदे कार्यत्वप्राप्त्याऽनादित्वं भज्येत पारतंत्र्यप्राप्त्या स्वातंत्र्यं च भज्येत अतः कर्मधारयो न कार्यः किंतु बहुव्रीहिं कृत्वा कामस्येश्वराधीनत्वमेव वक्तव्यं न तु ईश्वराभेदः तथा कामोऽस्मीति गीताया अपि कामस्य ईश्वरपारतंत्र्यमेवार्थो वक्तव्यः न त्वभेद इति

शंकराचार्यैः यदा एककामाभेदः महानर्थभिया परित्यक्तः तदा किमु वक्तव्यं विण्मूत्रादिसर्वाभेदः परित्याज्य इति। अतः ( परमात्मनः दोषित्वप्राप्तेः ) सर्वं खल्विदं ब्रह्मेत्यत्र वासुदेवःसर्वमित्यत्राऽपि ब्रह्मणः न सर्वाभेदो वक्तव्यः किंतु—

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।
अनंतवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः॥

( गी. ११-४० )

इति गीतोक्तदिशा वासुदेवः सर्वमित्यस्य वासुदेवः सर्वव्यापक इत्यर्थ एवांगी करणीयः न तु सर्वाभिन्नः ( सर्वस्वरूपः ) इति वासुदेवः सर्वमित्यस्य सर्वं खल्विदं ब्रह्मेत्यस्य आत्मैवेदं सर्वमित्यादिवाक्यानां चाद्वैतिभिरपि सर्वब्रह्मपदयोः सामानाधिकरण्येनाभेदः (ऐक्यं) स्वीकर्तुं न शक्यते बाधात् किंतु लक्षणया वासुदेवः सर्वं सर्वभ्रमाधिष्ठानमिति वा सर्वं वासुदेवः वासुदेवे कल्पितमिति वा तथैव सर्वंखल्विदं ब्रह्म इत्यत्राऽपि 'सर्वं' ब्रह्म ब्रह्मणि कल्पितमिति वा ब्रह्मसर्वं सर्वभ्रमाधिष्ठानमिति वा अर्थः स्वीकार्यः नतु सर्वाभिन्नं ब्रह्मेति।

अद्वैतिमतरीत्या अयमप्यर्थो न संभवति ब्रह्मण्यध्यासासंभवात् ब्रह्मशब्दस्य ब्रह्मणि कल्पित इत्येवार्थः लक्षणया करणीय इत्यत्र नियामकाभावाच्च इति नेदं गीतावाक्यं नेमाः श्रुतयः जगतः ब्रह्माभेदे प्रमाणं भवितुमर्हंति।

इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति त प्राहुः क्षेत्रज्ञ इति तद्विदः॥ गी. १३।१॥

इति अयं श्लोकः जीवब्रह्मणोरभेदे चिन्नस्वामिना उदाहृतः नह्येतस्मिन् श्लोके जीवब्रह्मणोरैक्यबोधकं पदमस्ति प्रमाणसिद्धस्य शरीरस्य क्षेत्रमिति नाम तज्ज्ञाता क्षेत्रज्ञ इति उच्यते इति पंडिता वदंति इत्येतावत्प्रतीयते अतः जीवब्रह्मणोरभेदविषये एतद्वाक्योदाहरणमत्यंतासंगतमेव।

यत्तु महेश्वरभिक्षुणा "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" (गी. १३ १) इति श्लोकं धृत्वा ब्रह्मणः सर्वात्मकत्वं प्रतीयत इत्युक्तं तदपि उत्तरगीतातच्छांकरभाष्यानवलोकननिबंधनं।

तथा हि 'ज्ञेयंयत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते' 'अनादिमत्परं ब्रह्म...' इति गीताश्लोके परब्रह्मैव क्षेत्रज्ञ इत्युक्तेः शंकराचार्येणापि सप्तमश्लोकावतरणिकादौ क्षेत्रज्ञः परं ब्रह्मैवेत्युक्तत्वात् क्षेत्रज्ञं परं ब्रह्म मां विद्धि इति कृष्णपरब्रह्मणोरभेद एवोच्यते न तु जीवाभेदः इति नैतद्वाक्यमपि जीवब्रह्मणोरभेदबोधकं।

सर्वभूतेषु येनैकं भावमव्ययमीक्षते (१८।२०
यावत्संजायते ... अनादित्वात् (१३।२६।३७
अहंकारं (१८।४३
उपद्रष्टाऽनुमंता च (१८।५३
योऽन्तःसुखोंतराराम: (५।२४
यदा भूतपृथग्भावं (३।३०

इत्याद्युक्तगीतावचनैः भगवान् सर्वत्र ऐक्यमेव प्रतिपादयति इति सिद्धयति इति एतेषां श्लोकानामर्थमनुल्लिख्य जीवेश्वरयोरभेदः सिद्धयतीति चिन्नस्वामिनोक्तं तन्नयुक्तंयतः एतेषु श्लोकेषु जीवब्रह्मणोरैक्यबोधकमेकमपि पदं नास्ति प्रत्युत एतेषु सर्वेषु श्लोकेषु भेदबाधकान्येव पदानि संति इति कथं एतैः कारणाभावेऽपि जीवब्रह्मणोरभेदभ्रमः समजनि चिन्नस्वामिनां इति इदं आश्चर्यं अथवा किमाश्चर्यं कारणाभावेऽपिजगतः भ्रमं वदतां भ्रम विशिष्टब्रह्मस्वरूपाणां च, तथापि चिन्नस्वामिवत् देवस्वभावा अपि मुह्येयुरिति तेषां मोहनिरासार्थं संक्षेपेणार्थः प्रदर्श्यते विस्तरस्तु गीतार्थविचारे स्पष्टः तत्रैव पश्यंतु।

सर्वभूतेषु येनैकं भावमव्ययमीक्षते,
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकं १८।२०

'येन' ज्ञानेन 'विभक्तेषु' परस्परं भिन्नेषु 'सर्वभूतेषु (विद्यमानः)' 'अविभक्तः' स्थानभेदप्रयुक्तभेदरहितः 'एकः' एकत्वसंख्यायुक्तः परमात्मा विषयीक्रियते तज्ज्ञानं सात्त्विकमिति 'य आत्मनि तिष्ठन् यो विज्ञाने तिष्ठन् यः पृथिव्यां तिष्ठन्'इत्यादिश्रुत्युक्तरीत्या 'सर्वभूतस्थमात्मानं' 'यो मां पश्यति' सर्वत्र इत्यादिगीतोक्तरीत्या च सर्वान्तर्यामिणः भिन्नभिन्नानेकप्राणिषु ( जीवेषु ) स्थितस्य परमात्मनः ऐक्यं। जीवेभ्यः परमात्मन आधाराधेयभावेन ज्ञातृज्ञेयभावेन च भेदं कथयतीतीदं वाक्यं कथं जीवब्रह्मणोरैक्यबोधकमित्यवगतं लोकोत्तरप्रज्ञेन।

यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम्।

क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ॥

इति श्लोकस्य हे अर्जुन! 'सत्त्वं' ये सर्वप्राणिनः उत्पद्यंते यच्च स्थावरजंगमात्मकं जगत् उत्पद्यते तत्सर्वं प्रकृतिपुरुषसंयोगाज्जायते इति विद्धि, एवं अस्य श्लोकस्यार्थो वर्तते नात्र जीवब्रह्मणोरभेदः बोध्यते प्रत्युत कार्यकारणभावेन जीवजडात्मकप्रपंचस्य ब्रह्मणः भेद एव प्रतीयते—इति एतच्छ्लोकोदाहरणं अयुक्तमेव।

अनादित्वात् निर्गुणत्वात् परमात्मायमव्ययः।

शरीरस्थोपि कौंतेय न करोति न लिप्यते ( गी० १३।३१ )

इति श्लोकस्य हे अर्जुन! आदिरहितः तथा गुण ( सत्त्वरजस्तमो) रहितः अतएव अव्ययः विकारशून्यः परमात्मा देहे स्थितोऽपि न करोति न देहकृतकर्मणा लिप्यते संबद्धो भवति इत्यर्थकत्वेन नैतेनापि श्लोकेन जीवब्रह्मणोरैक्यसिद्धिः।

अहंकारं बलं दर्पं कामं क्रोधं परिग्रहं।

विमुच्य निर्ममः शांतः ब्रह्मभूयाय कल्पते (१८।५१)

हे अर्जुन! अहंकारं बलं दर्पं कामं क्रोधं परिग्रहं च विमुच्य

ममताशून्यः सन् शांतः योगीपुरुषः 'ब्रह्मभूयाय' ब्रह्मभवनाय ब्रह्म-साक्षात्काराय कल्पते समर्थो भवति इत्यर्थकतया नानेन श्लोकेनै-क्यसिद्धिः प्रत्युत द्रष्टृद्रष्टव्यभावेन भेदस्यैव सिद्धिरिति ।

उपद्रष्टानुमन्ता च कर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥

परमात्मा अस्मिन् शरीरेऽवस्थितः सन् जीवैः क्रियमाणानां कर्मणां द्रष्टा अनुमोदकश्च भर्ता भोक्ता महान् ईश्वरः तथा पर-मात्मा इत्यपि कथ्यते एवं रीत्या अर्थो वर्तते अत्रापि नैक्यं प्रतिपाद्यते प्रत्युत परमात्मा महान् ईश्वरः इत्याद्युक्त्या भेद एव प्रतीयते इति ।

योऽन्तः सुखोऽन्तरारामः तथान्तर्ज्योतिरेव च ।
स योगी ब्रह्म निर्वाणं ब्रह्मभूतोऽधिगच्छति (५।२४)

यस्य योगिनः सुखं आत्मना भवति यस्य योगिनः रमणं आत्मनि भवति एवं यस्य प्रकाशलाभः आत्मनैव भवति स एव योगी 'ब्रह्मभूतः' * ब्रह्मभवनवान्=ब्रह्मसाक्षात्कारवान् भूत्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वाणं सर्वानर्थनिवृत्तियुक्तस्थितिं प्राप्नोति इत्यर्थकश्लोके जीवब्रह्मणोरैक्यं केनापि पदेन न बोधितं प्रत्युत ज्ञातृज्ञेयभावेन आधाराधेयभावेन च भेद एवोक्त इति नायमपि श्लोकः अभेद बोधकः प्रत्युत भेदबोधक एव ।

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा (१३ ३०)

यस्मिन् काले भूतैः प्राणिभिः'पृथग्भावं'भेदं 'एकस्थं' एकस्मिन् परमात्मनि वर्तमानं पश्यति एवं तत् एव परमात्मनः जगत उत्पत्तिं जानाति तस्मिन् समये ब्रह्म प्राप्नोति इत्यर्थसद्भावाज्जीवब्रह्मणो भेदसाधकस्यास्याभेदसाधकत्ववर्णनमनुचितम् ।

---

* अद्वैतिभिरित्थमेव व्याख्यातं ।

यच्च—उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।

आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥७।१८॥

असंगशस्त्रेण दृढेन छित्वा

इति गीताश्लोकोदाहरणं महेश्वरस्य तदप्यसंगतमेव।

अत्र आत्मशब्दस्य आप्नोतीति आत्मा इति व्युत्पत्त्या प्राप्तिमद्वाचकत्वेन ज्ञानी तु आत्मा मत्प्राप्तिकर्ता इत्येवार्थः न तु मत्स्वरूप इति, अद्वैतमतरीत्या विशिष्टस्य ज्ञानिनः विशिष्टकृष्णस्वरूपत्वासंभवात् ज्ञान्यात्मपदाभ्यां लक्षणया चिन्मात्रे गृहीत्वा चित् चित् इति बोधस्य तत्त्वमस्यादिवाक्यविचारे उक्तरीत्या असंभवाच्च स हि ज्ञानी आस्थितःआरोढुं प्रवृत्तः इति अस्मिन् श्लोके तथा उत्तरश्लोकेऽपि मां प्रपद्यत इति परमात्मप्राप्तेः कथनाच्च आर्तजिज्ञास्वर्थार्थिनामपि अद्वैतमतरीत्या ब्रह्मत्वेन तान् परित्यज्य ज्ञानीति पदस्य शब्दज्ञानवान् आत्मतत्त्वसाक्षात्कारार्थी मुमुक्षुरित्यर्थकत्वेन परोक्षज्ञानिन एवात्मत्वोक्तेरयोगाच्च ममात्मा भद्रसेन इत्याद्यनेकप्रयोगेषु अत्यन्तप्रिये आत्मशब्दप्रयोगदर्शनात् 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इति पूर्ववाक्ये कृष्णेन अत्यन्तप्रियत्वस्य कथनेन च ज्ञानी 'आत्मा अत्यन्तप्रियः' इत्याद्यर्थकत्वस्यापि संभवाच्च ज्ञानी तु आत्मैवेत्यत्र ज्ञानिनः आत्मत्वे आस्थितः स हि इति आस्थितत्वस्य (आरोढुंप्रवृत्तत्वस्य) हेतुत्वोक्त्या आत्मशब्दस्य प्राप्तिकर्तृत्वाद्यर्थकत्वस्यैवोचितत्वाच्च अन्यथा (आत्मशब्देन) ज्ञानिनः आत्मस्वरूपत्वांगीकारे आस्थितः सहि इति हेतुत्वोक्तेः असंगतत्वापत्तेः। अतः नेदं वाक्यं ज्ञानिकृष्णयोः अभेदबोधकं किंतु ब्रह्मप्राप्तिमानित्याद्यर्थकमेव।

'असंगशस्त्रेण दृढेण छित्वा' 'ततः परं तत्परिमार्गितव्यं' इति वाक्येन असंग (वैराग्य) शस्त्रेण छित्वा परमात्मा विचारणीय इत्येवोच्यते न जीवेश्वरयोरैक्यं न वा जगतः मिथ्यात्वं प्रत्युत

विचार्यविचारकत्वाभ्यां जीवब्रह्मणोर्भेदः छेदनकर्मत्वादिना बंधादि- जगतः सत्यत्वं च प्रतिपाद्यत इति एतेषां श्लोकानां भेदपरत्वेन पूर्वोक्तप्रकारेण गीतायां अभेदबोधक एकोऽपि श्लोको नास्ति प्रदर्शिताश्च परःशतं श्लोकाः भेदबोधका 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्याद्याः ईश्वरोऽहमित्याद्यभेदजगन्मिथ्यात्वादिनिंदापराश्चेति विरम्यते विशेषस्तु गीतार्थविचारे द्रष्टव्यः ।

एवं जीवब्रह्मैक्यबोधकस्य अद्वैतिसमयैव श्रुतिसूत्रगीताविरोधः न तु जीवेश्वरभेदबोधकद्वैतसमयस्येति—

जीवेश्वरैक्यविषये चिन्नशुक्लहाराणमहेश्वरैरुदाहृताः हरिरूपी महादेव इत्यादिपुराणश्लोकास्तु युष्मदुक्तरीत्यैव श्रुतिसूत्रगीतारूपेतिहासापेक्षया दुर्बलत्वात् श्रुतिसूत्रगीताविरुद्धत्वाच्च अन्यार्थाः वंचनामूलका वा एवेति न तैः जीवेश्वराभेदसिद्धिः ।

मुख्यवृत्त्या बोधितयोः ऐक्यस्य बाधितत्वेन तेषां पुराणानां मुख्यवृत्त्या ऐक्यबोधकत्वासंभवश्च यथा भेदबोधः स्यात् तथा लक्षणा स्वीकर्तव्या वा यथा अभेदबोधः स्यात्तथा लक्षणा स्वीकर्तव्या वेत्यत्र नियामकाभावेन लक्षणयापि ऐक्यासिद्धिरेव ।

न केवलं नियामकाभावः प्रत्युत लक्षणया यथा भेदबोधः स्यात्तथैव लक्षणा स्वीकर्तव्येत्यत्र श्रुतिसूत्रगीताद्यानुकूल्यरूपनियामकसद्भावश्चेति न पुराणाद्यैः जीवेश्वराभेदसिद्धिरिति ।

यतूक्तं अतएव 'उदरमंतरं कुरुतेऽथ तस्य भयं भवति' इति श्रुतौ भेदनिंदा उपपद्यते इति तदनुपपन्नं पूर्वोत्तरवाक्यविरोधात् पूर्वं हि 'यदा ह्येवैष इत्यत्र अदृश्ये दृश्यात् विकारात् वस्तुनः भिन्ने अनात्म्ये शरीररहिते अनिरुक्ते निर्वचनीयवस्तुभिन्ने अनिलयने आश्रयभिन्ने सर्वकार्यधर्मविलक्षणे ब्रह्मणि इति अनेकेषां भेदानां प्रतिपादनात् एवमुत्तरवाक्येऽपि 'भीषास्माद्वातः पवते' इत्यादौ प्रशास्तृप्रशासितव्यभावेन सूर्यादिभेदस्य कथनात् उपनिषदंतर-

विरोधाच्च तथा हि 'यः पृथिव्यां तिष्ठन्' 'य आत्मनि तिष्ठन्' ( बृ० ) इत्यादिवाक्यैः पृथिव्याद्यभिमानिजीवविशेषैः सामान्यतश्च जीवेनात्मपदोदितेन ब्रह्मणः भेदस्य कथनात् एवं सत्यं ज्ञानमनंत(तै) इत्यादिवाक्यैः असत्यभेदाज्ञानभेदादीनां बोधनस्य त्वयैव वर्णितत्वात् एवमन्यत्र धर्मात्' इति (कठ) वाक्येनापि धर्माधर्मभूतभाव्यात्मकसमस्तवस्तुभेदानां ब्रह्मणि स्पष्टं प्रतिपादनाच्च ।

बौद्धाभिमतविज्ञानशून्याभ्यां अद्वैत्यभिमतब्रह्मणः भेदसाधनार्थ प्रवृत्तेन शुक्लेनेदं वाक्यं भेदसामान्यनिषेधकं इति वक्तुमशक्यत्वाच्चेति एतेन नात्र काचनभिदास्ति इत्यादिवाक्यान्यपि व्याख्यातानि।

यच्च 'अथ योन्यां देवतामुपास्ते' इत्यादेः भेदनिंदापरत्ववर्णनं तत् स्वीयशांकरभाष्यानवलोकनविजृंभितं । तथा हि परमात्मानं परित्यज्य इंद्राद्यन्यदेवतामुद्दिश्य यागादि कुर्वतां इंद्रादिदेवताश्रित्वं अनुसंदधतां निंदापरं तेषामेव पशुत्वादिकं प्रतिपादयतीति एतच्छांकरभाष्ये गीताभाष्ये च प्रतिपादितं युक्तं चैतत् । अन्यस्या देवताया अन्यत्वेनोपासनस्यैव न्याय्यत्वात् भेदनिंदापरत्वे अथ योऽनन्यां देवतामित्येव वक्तव्यं स्यात् तस्माद्भेदनिंदापरमिति वदन्नेव श्रुत्यर्थपरिज्ञानशून्यस्त्वात्पशुरिति ।

'तत्परत्वे ( भेदपरत्वे ) स एव स्तूयेत इति' यदापादनं कृतं तन्नानिष्टं स्तूयत एव वेदे भेदः।

"प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठेति" वाक्येन अन्येन जीवेश्वरभेदज्ञानिना कृतः उपदेशः समीचीनज्ञानाय भवतीति भेददर्श्युपदेशजन्यज्ञानस्य समीचीनत्वोक्त्या "पृथगात्मानं प्रेरितारं च मत्वा" "जुष्टं यदा पश्यत्यन्यमीशमिति" भेदज्ञानिनः मोक्षोक्त्या च भेददर्शी स्तूयते । निंद्यते चाभेददर्शी 'अनन्यप्रोक्ते गतिरत्र नास्ति" इति अनन्येन जीवेश्वराभेदज्ञानिना ( अद्वैतिना ) उक्ते गतिः नास्ति इति गत्यभावोक्त्या, ईश्वरोहमिति अभेदज्ञानिनः अधमगत्युक्त्या च इति ।

चार्वाकवत् वैभाषिकवत् जगत्सत्यत्ववादी माध्वश्चार्वाकः वैभाषिकः शिवद्रोही चेति मंतव्यं इति यदुक्तं शुक्लादिभिः तत्रेदमवधेयं वयं तु वैदिकाः वेदैकशरणाः वेदेन यद्यदुच्यते तत्तदंगीकुर्मः यद्यन्निषिध्यते तत्त्यजामः न ह्यन्यैः स्वीकृतमिति त्यजामः अन्यैस्त्यक्तमिति स्वीकुर्मश्च 'तदेतत्सत्यं' विश्वं सत्यं' इत्यादिश्रुतिसूत्रगीतारूपप्रस्थानत्रयेण जगत्सत्यमिति कथ्यते इति जगतः सत्यत्वं स्वीकुर्मः न हि चार्वाकेण वैभाषिकेण वा जगतः सत्यत्वं स्वीकृतमिति वेदसिद्धं परित्यक्तुं शक्यते यथा अद्वैतिनामवैदिकबौद्धसाम्यं स्वाभिमतवैदिकयज्ञस्नानसंध्याद्याचारस्य विघातकं । नास्तिकत्वप्रापकं न तथा जगतः सत्यत्वांगीकारः आस्तिकक्रियमाणयज्ञस्नानसंध्याद्याचारविघातकः नास्तिकत्वसंपादकश्चेति जगत्सत्यत्वांगीकारः नास्माकं कमपि दोषमावहति प्रत्युत वेदोक्तेश्वरस्वर्गादिपरलोकयज्ञाद्यंगीकारप्रयुक्तवेदप्रामाण्यांगीकाररूपास्तिकत्वमेवावेदयतीति ।

शिवो मिथ्या पार्वती मिथ्या शिवस्य पार्वतीपतित्वं मिथ्या शिवस्य विचित्रशक्तिमत्त्वं मिथ्या गुरुत्वं मिथ्या इति वदंतोऽद्वैतिनः शिवद्रोहिणो वा शिवः सत्यः पार्वती सत्या पार्वतीपतित्वं सत्यं विचित्रशक्तिमत्त्वं सत्यं गुरुत्वं ( ज्ञानदातृत्वं ) सत्यमित्यादिमहामहिमत्वं प्रतिपादयंतः द्वैतिनो वा शिवद्रोहिण इति शिव एव विवेचयतु ।

यच्च चिन्नस्वामिना माध्वैर्वेदगीतानां अनर्थः कृत इति प्रतिज्ञाय अक्षरशब्दस्य लक्ष्मीवाचकत्वंत्रैगुण्यविषया इत्यस्य त्रैगुण्याख्यविषनाशार्थकत्वं उदपानशब्दस्य कर्मतदंगवाचकानां ज्योतिष्टोमादिशब्दानां च परमात्मार्थकत्वं यागपरत्वाभावश्च ज्योतिष्टोमशब्दस्य तत्त्वप्रकाशिकायां ज्योतिषां स्तोम इति षष्ठीतत्पुरुषाश्रयणमित्याद्युदाहृतं तदेतत्स्वपरग्रंथाज्ञानमूलं दुराग्रहप्रयुक्तं च ।

तथाहि अक्षरशब्दस्य लक्ष्म्यर्थकत्वं अयुक्तमिति वदतः किं लक्ष्मीपदार्थ एव नास्तीति अभिप्रेतं उताक्षरशब्दस्य तद्वाचकत्वं नास्तीति

नाद्यः 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रेपार्श्वे' इत्याद्यनेकश्रुतिषु लक्ष्मीवान् इत्यादिसहस्रनामादिषु लक्ष्म्याः बोधनात् न द्वितीयः नक्षरतीति अक्षर इति व्युत्पत्त्या नाशाभाववदर्थकस्याक्षरशब्दस्य लक्ष्मीः श्रीः कमलाविद्या...भूतानामीश्वरी नित्यासत्यासर्वगता शुभा विष्णुपत्नी इति पुराणसिद्धनित्यलक्ष्मीवाचकत्वसंभवात्।

'ता वा एताः सर्वा ऋचः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राणऋच इत्येव विद्यात्' इत्यैतरेये 'यो देवानांनामधा' इति ऋग्वेदे 'लौकिकाः वैदिका शब्दा ये केचित्संति पार्वति। नामानि रामचंद्रस्य सहस्रं तेषु चाधिकं' इति पद्मपुराणे 'वेदाक्षराणि यावंति कथितानि द्विजातिभिः। तावंतिहरिनामानि' इत्याद्यनेकग्रन्थेषु ब्रह्मणः सर्वशब्दवाच्यत्वकथनेन कर्मतदंगवाचिनां ज्योतिष्टामादिशब्दानांउदपानादिशब्दानां च विष्णुवाचकतायाः बहुतरप्रमाणसिद्धत्वात् "ब्रह्मैव सर्वनामानि बिभर्तीति श्रुतिर्जगौ" (अ० ५०) इति शंकराचार्येणापि सर्वे शब्दाः ब्रह्मबोधका इत्युक्तत्वाच्च।

न च निर्वचनासंभवः तस्यापि तं यच्छतं वर्षाण्यभ्याच्छेत्, इत्यादिना वेद एव दर्शितत्वात् यदपि 'अप्रसिद्धक्लिष्टार्थकल्पने दुराग्रह इति कथनं तत् श्रुतिसूत्रभाष्याद्यनवलोकननिमित्तमेव श्रुतिसूत्रभाष्यादिग्रन्थावलोकिनां वैदिकानां सदाग्रह एवेति श्रुत्यैव स्फुटप्रतीयमानार्थपरित्यागपूर्वकं अस्फुटक्लिष्टार्थवर्णनं देवताप्रीतिसंपादकं इत्यपि स्फुटंप्रतिपादनात्। तथा हि श्रुतिः 'इदं पश्यतीति इदंद्रः इदंद्रं संतं इंद्रमित्याचक्षते परोक्षप्रिया इवहिदेवाः इंधो हवै नाम'''एतं इंधं संतं इंद्रमित्याचक्षते परोक्षेणैव परोक्षप्रिया ह देवा प्रत्यक्षद्विषः (बृ) अहरिति चैतद्रूपं हतेर्जहातेश्चेतिइर्वीविद्युद्ध्वस्थाहुः विदानाद्विद्युत् (बृ) इत्यादिरूपाशुचमभिदुद्राव शुचा वा अभिदुद्रुवे शुचावारैक्वमभिदुद्रावेति शूद्रः इति शुगस्य तदाद्रवणात् इतिसूत्रकारसूचितया अवयवव्युत्पत्त्या वेदगतशूद्रशब्दस्य क्षत्रियपरत्वं शंकराचार्यादिभिः प्रदर्शितं रुजं

द्रावयतीति रुद्र इति निर्वचने ककारत्यागवत् शुचं अभिदुद्रावेति शुग्द्र इति भाष्ये शूद्र इति ककारत्यागः ह्रस्वोकारस्थाने ऊकारयोगश्च कृतः इयमपि व्युत्पत्तिः अलौकिकी न प्रसिद्धव्याकरणसिद्धा एतत्सर्वमभिप्रेत्योक्तं अभियुक्तैः ।

योक्षरत्यागयोगाभ्यां क्षत्रं शूद्राभिधं व्यधात् ।

तस्य व्यासस्य वचसः वैदग्धीं वेत्ति कः कविः इति ।।

एवं तज्जलानित्यत्र ( छा० ) तज्जं च तल्लं च तदनं च तज्जलान् इति व्युत्पत्तिः प्रदर्शिता शंकराचार्येण त्वन्मतेऽपि व्युत्पत्त्याचार्येतिपदवीमनर्हता "प्रजावै वाजस्ता एष बिभर्ति यद्बिभर्ति तस्माद्भरद्वाज इत्याद्यैतरेये !

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।

यच्चास्य संततो भावः तस्मादात्मेति भण्यते ।।,,

इत्यादि महाभारतेपि आप्नोतीत्यात्मा इत्यादयः व्युत्पत्तयः प्रदर्शिताः । कश्च ईशश्च केशौ तौ प्रवर्तत इति केशव 'एतस्य ब्रह्मणो नाम सत्यमिति तानिह एतानि वा त्रीण्यक्षराणि संतीयमिति तद्यत्सत् तदमृतमथ यत्ति तन्मर्त्यमथयद्यं तेनोभे यच्छति, इति छांदोग्ये सत्यमितिशब्दस्य अलौकिकी व्युत्पत्तिः प्रदर्शिता एवमेव बृहदारण्यकेऽपि ( ५।५।१ ) मंत्रे तदेतत्त्र्यक्षक्षरं सत्यमिति स इत्येकमक्षरंतीत्येकमक्षरं यमित्येकमक्षरमित्यादिना सत्यशब्दनिर्वचनं कृतं ।

शैत्याच्छयनयोगाच्च शीति वारिप्रचक्षते ।

तत्पानादुक्षणाच्चैव शिपयो रश्मयो मताः ।।

तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते ।

इत्यादिशिपिविष्टादिपदनिर्वचनं सहस्रनामशंकरभाष्ये एवं श्रुतिस्मृतिसूत्रतद्भाष्यादौ बहुपदानां अलौकिकाः व्युत्पत्तयः प्रदर्शिताः

अवसरे पुनः प्रदर्शयाम एवं प्रसिद्ध लौकिकव्युत्पत्त्यनुसारेण (प्रसिद्धव्याकरणेन) परमात्मनि शब्दानां निर्वचनासंभवेऽपि केषांचिदक्षराणामावापोद्वापाभ्यां परमात्मबोधकत्वं वक्तव्यं "परोक्षप्रियाः परोक्षनामग्रहणप्रिया हि देवाः किमु सर्वदेवानामपि देवः महेश्वर" इति तैत्तिरीयशांकरभाष्यादौ लौकिकव्युत्पत्त्यनुसारिशब्दैः कथने परमात्मनः प्रीतिर्न भवति अलौकिकव्युत्पत्त्यनुसारिशब्दैः कथने परमात्मनः संतोषो भवति लौकिकव्युत्पत्यनुसारिभिः शब्दैः ब्रह्मणः प्रतिपादने द्वेषश्च भवतीति स्पष्टमुक्तं इत्थं च निर्वचनकर्तृषु वेदपुरुषसूत्रकारमध्वाचार्य शंकराचार्य विद्यारण्ययास्कादिष्वेकपंक्त्युपविष्टेष्वपि पंक्तिभेदमविगणय्य कथमस्मदाचार्याणामेव व्युत्पत्याचार्य इत्युपाधिदानायोत्सहसे लज्जाशून्य इव । यस्योपाधेर्न लंघनेजंघालवो भवदाचार्या अपि तस्मात् सर्वेषां लौकिकवैदिकपदानां ब्रह्मपरत्वे प्रमाणसद्भावात् व्युत्पत्तिसंभवाद्वेदादिषु व्युत्पत्तेः प्रदर्शितत्वाच्च अलौकिकव्युत्पत्त्यनुसारिशब्दैः स्तोत्रकर्तृषु द्वेषसंभवाच्च यदस्मदाचार्याणां सर्वेषां शब्दानां ब्रह्मपरतावर्णनं तत् वेदद्रष्टृसूत्रमहाभारतादिप्रणेतृणां प्राचीनानामनुमतमेवेति नात्र वेदगीताव्याकुलीकरणं अर्थस्यानर्थकरणं च इति वेदाद्यर्थपरिशीलिनां सुगमं पूर्वोक्तरीत्या पदनिर्वचनकर्तॄणां वेदर्षिबादरायणप्रभृतीनां संभवन् व्युत्पत्त्याचार्यः इति उपाधिः अस्मदीयाचार्याणामप्यलंकार एवेति वेदाद्यर्था परिशीलिनां भवादृशानामेवायंव्युत्पत्याचार्य इति उपाधिर्माभूदिति।

न च सर्वशब्दानां परमात्मवाचकत्वे यज्ञादिबोधकप्रमाणाभावेन यज्ञाद्यसिद्धिरिति वाच्यं वसंते वसंते ज्योतिषा यजेतेत्यादिवाक्यानां यागादिपरत्वमपरित्याज्यैव परमात्मपरत्वोक्तेः दृश्यते च रामकृष्णकाव्यस्य सर्वदो माधवः गायादित्यादिश्लेषबद्धेषु श्लोकेषु चोभयपरत्वं ।

"नासतो विद्यते भावो नाभावो विद्यते सतः" इति गीताश्लो-

के अभाव इति पदच्छेदे व्याकरणविरोधाद्यभावेपि बलात्कार इति (खींचा-तानी) कथनं स्वोक्तार्थे टिलकसंमतिप्रदर्शनं चानुचितमेव यतः उभावप्यश्रुतग्रंथौ उभावपि जडात्मकौ।

एककार्यप्रविष्टा ये तस्करा यामिकैर्धृताः।
मुच्यंते राजदंडात्किं साक्षीकृत्य परस्परं॥

इति श्लोकोक्तन्यायेन त्वद्वत् अश्रुतव्याकरणादिशास्त्रस्य तिलकस्य साक्षिदानमयुक्तमेव। अकार्यकारित्वात्।

किंच यत्र व्याकरणविरोधो नास्ति आनुगुण्यं च वर्तते तत्र बलात्कारं ब्रुवाणो ह्ययं यत्र व्याकरणविरोधो जागर्ति तत्र 'संभूतिं च विनाशं चेत्यादौ पद्यादिभागएव असंभूतिमिति पदं कथयतः शंकराचार्यस्य किं दूषणं ब्रूयादिति विद्वांस एव विदांकुर्वंतु।

इदं पुनरिहावधेयं अद्वैतमतबौद्धमतयोः साम्ये आंग्लभाषाविदां संमतिप्रदर्शनं 'पतितपावन्या भगवत्या भागीरथ्या पूतो भारतवर्षः आर्याणां आदिनिवासस्थानं न भवेत्। इत्यादिना प्रदूष्य पुनः।

शंकराचार्योक्तः कर्मसंन्यासः अयुक्तः नाहं शांकराद्वैती।

आंग्लभाषाविदां आर्याणां भारतवर्षो न निवासस्थानं वेदा नापौरुषेया इति वदंतं टिलकमनुसरन्नस्तोकमपि व्याहतभाषणाद्बिभेति इति।

यदपि वेदगीतयोः शोचनीयत्वं कथितं तद्वेदगीतयोः स्वरूपमेवापलपतां अद्वैतिनां मत एव सम्यगवकल्पते न तु आपाततः प्रतीयमानविरोधशांतये तत्साद्गुण्याय च प्राचीनबादरायणाचार्यादीनां रीतिमनुसृत्य प्रयतमानानामस्माकं मते इति।

यागानुष्ठानादेर्भ्रममात्रत्वकल्पनमवैदिकतासंपादकमित्याभिधाय यागानुष्ठानभस्मधारणादि, भ्रमकल्पितमिति वदतः वैदिकत्वं कथं संभवेदित्यप्यवधेयं न माध्वैः यागानुष्ठानं भ्रममात्रमिति कथ्यते

इति यागानुष्ठानं भ्रममात्रमिति कल्पयंति इति आरोप्य अवैदिकत्वा-रोपः अज्ञानमूलक एवेति।

'त्रैगुण्यविषया वेदानिस्त्रैगुण्यो भवार्जुन' इति श्लोकस्य यः, वेदास्त्रैगुण्यविषयाः त्रैगुण्यप्रतिपादकाः त्वं तु निस्त्रैगुण्यः वेदपरित्यागवान् भव इति प्रातीतिकोऽर्थः स वैदिकै-र्नाङ्गीकारार्हः इति वेदशब्दस्य कर्मकांडरूपवेदविशेषपरत्वेन संको-चोऽद्वैतिभिरंगीकृतः द्वैतिभिस्तु त्रैगुण्यविषनाशका वेदाः तान् आश्रित्य त्रैगुण्यरूपसंसाररहितो भवेति विनैव संकोचं अर्थो वर्णित "इतिप्रसिद्धार्थपरत्वे संभवतीत्युक्तिः" स्वग्रंथानवलोकनमूलैव।

यच्च माठरादिश्रुतयः ब्रह्मतंत्रादिस्मृतयश्च अनाघ्रातनामगंधा इति। तत्र प्रष्टव्यं सर्वैर्न ज्ञायंते उत त्वयैव नाद्यः परबुद्धेरप्रत्यक्षत्वेन सर्वान् प्रत्यप्यसिद्धेः कूपमंडूकायमानेन त्वया ज्ञातुमशक्यत्वात्

न द्वितीयः त्वदनुपलब्धिमात्रेण उक्तश्रुतिस्मृतयः न संत्येवेति वक्तुमशक्यत्वात् तवानुपलब्धौ उपलब्ध्यर्थं यत्नः कार्यः न तु अविद्यमानत्वकथनरूपं साहसमनुष्ठेयं एवमेव श्वः कश्चन जाल्मः 'अग्निमीडे' ! इषे त्वा' इत्यादयोऽपि कल्पिताः यतो न मया दृष्टा इति ब्रूयात् तर्हि तेषामपि कल्पितत्वं अंगीकार्यं स्यात् अतो यत्नम-विधायैव कल्पिता इति कथनमनुचितमेव। तदेतदाह भगवान् पतं-जलिः महाभाष्ये पस्पशाह्निके 'संति वै शब्दाः अप्रयुक्ताः तद्यथा ऊष, तेर, चक्र, पेचेति ⋯ सर्वे खल्वप्येते देशांतरेषु प्रयुज्यंते न चैवोपल-भ्यंते उपलब्धौ यत्नः क्रियतां महान् शब्दस्य प्रयोगविषयः सप्तद्वीपा वसुमती त्रयो लोकाः चत्वारो वेदाः सांगाः सरहस्याः (सोपनिषदः) बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंश-तिधा बाहृच्यः नवधा आथर्वणो वेदः वाको वाक्यमितिहासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः एतावंतं शब्दस्य प्रयोगवि-षयमननुविश्य संत्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेवेति।

किंच शंकररामानुजशबरभृतिभिः सर्वैर्भाष्यकारैः स्वस्वग्रंथेषु अप्रसिद्धाः श्रुतय उदाहृताः न च ताः तवाप्रसिद्धत्वमात्रेण न संत्येवेति वक्तुं शक्यते ।

किंच शांकरभाष्यादौ याः श्रुतिस्मृतय उदाहृताः ताश्च बौद्धैर्नांगीक्रियंते इति त्वदीयभाष्यस्यायुक्तता स्यात् इत्युक्तौ इदमेव त्वया प्रतिवक्तव्यं न बौद्धान् प्रति श्रुतिस्मृतीर्ब्रूमः किंतु तत्प्रामाण्याभ्युपगंतॄन् प्रत्येव इति तथा वयमपि ब्रूमः यास्तव विप्रतिपन्नाःताः त्वां प्रति न ब्रूमः यास्तु संप्रतिपन्नास्ताभिरेव त्वां प्रति द्वैतं साधयामो व्यासेधामश्चाभेदं इति ।

यदपि तत्त्वप्रकाशिकायां ज्योतिष्टोम इत्यत्र ज्योतिषां स्तोम इति विग्रहः प्रदर्शितः इति तत्, तत्त्वप्रकाशिकायां अदर्शनाद् संगतमेव सर्वं घोषा इति वेद एव घोषस्य ब्रह्मवाचकत्वस्योक्तत्वात्तदितरशब्दानां या वृत्तिः सैव घोषाणांवृत्तिरितिवैदिकानां स्पष्टमिति ।

यदत्रोक्तं शुक्लेन "यदपि भस्मधारणनिंदनं माध्वस्येत्यादि" तत्त्वद्वैतिमतविमर्शभावानवोधनिबंधनं । तत्रहि–

कपालभस्मास्थिधरा ये ह्यवैदिकलिंगिनः ।
अवैदिकक्रियोपेतास्ते वै पाषंडिनः स्मृताः ॥"

इति अभिहिते कपालभस्मास्थिधारणं अवैदिकं पाषंडिधर्मभूतं श्रुतिगर्हितं भवता किमिति धार्यते इत्यर्थकेन ।

कपालभस्मचर्मास्थिधारणं श्रुतिगर्हितं ।
तत्त्वया धार्यते देव गर्हितं केन हेतुना ॥

इति श्लोकेन भवान्या पृष्टो रुद्रः वैदिकमार्गप्रविष्टवलवद्दैत्यगणपीडितसकलसुराभ्यर्थितविष्णवाज्ञया देवहितार्थमसुरमोहनाय केवलं वाह्यचिह्नतया भस्मादिधारणं विहितवानहमित्याह ।"

एवं देवहितार्थाय वृत्तिर्मे देवि गर्हिता ।

विष्णोराज्ञां पुरस्कृत्य कृतं भस्मास्थिधारणं ॥

बाह्यचिह्नमिदं देवि मोहनार्थाय विद्विषां ।

इति, अवैदिकत्वे भस्मादिधारणस्य तन्निमित्तकेन पापेन कथं न लिप्यते भवानिति शंकामपाकुर्वन्–

भस्मादिधारणाद्यत्तु संभूतं किल्बिषं त्वयि ॥

मंगलं तद्भवेत्सर्वं मन्मंत्रोच्चारणाच्छुभात् ॥

इतिभगवदुपदिष्टमनवरतभगवद्ध्यानतन्मंत्रजपरूपं तदुपायमाह ।

अथांतर्हृदये नित्यं ध्यात्वा देवं जनार्दनं–

जपन्नेव च तन्मंत्रं तारकं ब्रह्मवाचकं । इति

स्वकृतमोहविमोहितानामासुराणां फलमप्याह ।

भस्मादिधारणं कृत्वा महोग्रतपसावृताः ।

सर्वधर्मपरिभ्रष्टाः कालेयांत्यधमां गतिं इति ॥

तदेतत्पुराणवचनमुल्लिख्य प्राकृतभाषयाऽनूदितंमद्वैतमत विमर्शे तदेवं पार्वतीरुद्रसंवादरूपंदंवादरायणोपवर्णितं भस्मादिधारणनिंदनमनुवदतो माध्वानेव अवैदिका इति कथं दूषयसि स्मपहाय पुरोवादिनौ उमारमणबादरायणौ यदि तावपि अनेन दूषणेन दूषयसि- तर्हि श्लाघनीयप्रज्ञो देवानांप्रियः ।

यच्चात्र पौराणिकविप्रवेषधारिरुद्रकृतमोहप्रकारानुवादपराणि वचनान्यवलोक्य मोहितेन चिन्नस्वामिना प्रलपितं तदप्येतेनैव परास्तं । तिरस्कृताश्चैवं वदंतो भस्मत्रिपुण्ड्रधारणाय हिरण्यकशिपुसमाज्ञप्तेन तस्मिन्नेव विषये शण्डामर्कोपदिष्टेन च महाभागवतेन प्रह्लादेन ।

अहो भगवतः श्रैष्ठ्यं यन्मायामोहितं जगत् ।

अहो वेदांतविदुषः सर्वलोकेषु पूजिताः ॥

ब्राह्मणा अपि चापल्याद्दर्दत्येवं मदान्विताः ।

इत्यादिना मोहितत्वमदान्वितत्वचपलत्वादिकथनेन । प्रपंचित-श्चायमर्थः पुराणेषु तथा हि ।

सात्त्विकराजसतामसभेदेन त्रिविधाः प्रजाः सात्त्विकानां मोक्षः राजसानां संसारः तामसानां निरयः ।

श्रीमन्महाभारते ३५७ अध्याये मोक्षधर्मपर्वणि—

यथागमं यथा ज्ञानं निष्ठा नारायणः प्रभुः ॥

न चैनमेवं जानंति तमो भूता विशां पते ॥

तिस्रः प्रकृतयो राजन् देहबंधेषु निर्मिताः ॥

सात्विकी राजसी चैव तामसी चैव भारत ॥

सात्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः ॥

अत्रापि तद्विजानाति पुरुषं ब्रह्मवित्तमः ॥

नारायणं परं मोक्षे ततो वै सात्त्विकः स्मृतः ॥

राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते ॥

तदात्मकं हि पुरुषं जायमानं विशांपते ॥

प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिः स्वयम् ॥

पश्यत्येनं जायमानं ब्रह्मारुद्रोथवा पुनः ॥

तामसा निरयं यांति राजसा मानुषानथ ॥ ४७ ॥

सात्त्विका देवलोकाय गच्छंति सुखभागिनः ॥ (३०८)

सात्त्विकस्योत्तमं स्थानं राजसस्येह मध्यमं ॥

तामसस्याधमं स्थानं प्राहुरध्यात्मचिन्तकाः॥ ३४॥(३१९)

सात्त्विकराजसतामसविभागः अ० ३०७ ३१९ ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥(गी०)
ऊर्ध्वं गच्छंति सत्वस्थाः मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधोगच्छंति तामसाः ॥ (गी०)
सात्त्विकास्त्रिदशाः सर्वैः असुरा राजसा मताः ।
तामसा राक्षसाः सर्वे प्रकृत्याकृतिवर्णतः ॥
धर्मः सुराणां पक्षः स्यात् अधर्मोऽसुररक्षसां ।
अधर्मोथर्वदोक्तो राजसैस्तामसैः श्रितः ॥
विष्णुक्रमणपर्यंतो यागोऽस्माकं यथा तथा ।
राजसैस्तामसैर्ब्रह्मरुद्रावीज्यौ तु तद्गुणौ ॥ इति ॥

(सर्वसिद्धांतसंग्रहे व्यासमतनिरूपणे शंकराचार्यः)

क्वचिद्राजसतामसावेकीकृत्यासुरत्वेन सात्त्विकाश्च देवत्वेन निर्दिश्यन्ते । यथा-

द्वौभूतसर्गौलोकेऽस्मिन् दैव आसुर एव च । इति (गी०)
द्विविधो भूतमार्गोयं दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽसुरः ॥ इति च ॥
(आग्नेयपु० ३८६)

एते आसुरा एव पाषंडिन इत्यपि उच्यंते यथा—

श्रीपार्वत्युवाच—

पाषंडानां च संवादं वर्जयेदिति यत्त्वया ।
उक्तं महेश भगवञ्श्वपचादति गर्हितम् ।
ते यादृशाः समाख्याताः कैर्लिङ्गैश्चिह्निताभुवि ॥ १ ॥

रुद्र उवाच—

येऽन्यं देवं परत्वेन वदंत्यज्ञानमोहिताः ।

नारायणाज्जगन्नाथात्ते वै पाषंडिनस्तथा ॥ २ ॥

कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः ।

ऋते वनस्थाश्रमाच्च जटावल्कलधारिणः ॥ ३ ॥

अवैदिकक्रियोपेतास्ते वै पाषंडिनस्तथा ।

शंखचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ॥ ४ ॥

रहिता ये द्विजा देवि ते वै पाषंडिनः स्मृताः ॥ ५ ॥

यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ॥

समत्वेनैव वीक्षेत स पाषंडी भवेत्सदा ॥ ९ ॥

किमत्र बहुनोक्तेन ब्राह्मणा येप्यवैष्णवाः ।

न स्प्रष्टव्या न वक्तव्या न द्रष्टव्याः कदाचन ॥ ११ ॥

पार्वत्युवाच—

रुद्रस्य भस्मधारणादि असुरजनमोहनार्थमित्युक्तं—

कपालभस्मचर्मास्थिधारणं श्रुतिगर्हितम् ।

तत्त्वया धार्यते देव गर्हितं केन हेतुना ॥ १४ ॥

रुद्र उवाच—

नमुच्याद्या महादैत्याः पुरा स्वायंभुवेऽन्तरे ॥ १९ ॥

महाबला महावीर्या महावीरा महौजसः ।

सर्वे विष्णुरताः शुद्धाः सर्वपापविवर्जिताः ॥ २० ॥

त्रयीधर्मयुताः सर्वे भग्ना इन्द्रपुरोगमाः ।

विष्णोः समीपमागम्य भयार्ताः शरणं गताः ॥ २१ ॥

देवा ऊचुः—

अजेयान्सर्वदेवानां तपोनिर्धूतकल्मषान् ।
त्वमेवैतान्महादैत्याञ्जेतुमर्हसि केशव ॥ २२ ॥

महादेव उवाच—

इत्याकर्ण्य हरिर्वाक्यं देवानां च भयानकम् ।
तानवध्यान्विदित्वाथ मामाह पुरुषोत्तमः ॥ २३ ॥

श्रीभगवानुवाच-

त्वं हि रुद्र महाबाहो मोहनार्थं सुरद्विषाम् ।
पाखंडाचरणंधर्मं कुरुष्व सुरसत्तम ॥ २४ ॥
कपालचर्मभस्मास्थिचिह्नान्यपि हि सर्वशः ।
त्वमेव धृतवान्लोकान्मोहयस्व जगत्त्रये ॥ ३१ ॥
अवलक्ष्य मतं सम्यग्वेदबाह्यं द्विजाधमाः ।
भस्मास्थिधारिणः सर्वे भविष्यन्ति न संशयः ॥ ३३ ॥
त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः ॥
तेषां मतमधिष्ठाय सर्वे दैत्याः सनातनाः ॥ ३४ ॥
भवेयुस्ते मद्विमुखाः क्षणादेव न संशयः ।
अहमप्यवतारेषु त्वां च रुद्र महाबल ॥ ३५ ॥
तामसानां मोहनार्थं पूजयामि युगे युगे ।
मतमेतदवष्टभ्य पतन्त्येव न संशयः ॥ ३६ ॥

विष्णोःरुद्रपूजनं तामसासुरमोहनायेत्युक्तं तामसशास्त्रनिर्माणं तामसानां अधमागतिश्च उक्ता ।

महादेव उवाच—

तच्छ्रुत्वाहं यथोक्तं तु वासुदेवेन भामिनि ।
समुद्विग्नमना दीनो बभूवात्र वरानने ।। ३७ ।।
नमस्कृत्वाथ तं देवमब्रवं परमेश्वरम् ।।
त्वयोदितमिदं देव करोमि यदि भूतले ।
तस्मान्नाशो हि मे नाथ भविष्यति न संशयः ।
न शक्यं हि मया कर्तुमेतत्कृत्यं हरेऽधुना ।।२९।।
त्वदाज्ञापि च नोल्लंघ्या एतद्दुःखतरं महत् ।
एवमुक्तस्ततो देवि समाश्वास्य च मां पुनः ।। ४० ।।
तवाप्युज्जीवनोपायं कथयामि सुरोत्तम ।
नित्यं जप महाबाहो मम नामसहस्रकम् ।। ४२ ।।
श्रीरामाय नम इत्येवमुच्चार्यं मंत्रमुत्तमम् ।
सर्वदुःखहरं ह्येतत्पापिनामपि मुक्तिदम् ।
इमं मंत्रं जपन्नित्यममलस्त्वं भविष्यसि ।
भस्मास्थिधारणाद्यत्तु संभूतं किल्बिषं त्वयि ।। ४७ ।।

महादेव उवाच—

देवतानां हितार्थाय वृत्तिः पाषंडिनां शुभे ।
कपालचर्मभस्मास्थिधारणं तत्कृतं मया ।। ५३ ।।
तामसानि पुराणानि यथोक्तं विष्णुना मम ।
पाषंडशैवशास्त्राणि यथोक्तं कृतवानहम् ।। ५४ ।।
भस्मादिधारणं कृत्वा महोग्रतपसावृताः ।

मामेव पूजयांचक्रुः मांसासृक्चंदनादिभिः ॥ ५७ ॥
सत्त्वहीनास्तु निर्वीर्या जिता देवगणैस्तदा ।
सर्वधर्मपरिभ्रष्टाः काले यान्त्यधमां गतिम् ॥ ५९ ॥
ये मे मतमवष्टभ्य चरन्ति पृथिवीतले ॥
सर्वधर्मैश्च रहिताः पश्यन्ति निरयं सदा ॥ ६० ॥
एवं देवहितार्थाय वृत्तिर्मे देवि गर्हिता ॥
विष्णोराज्ञां पुरस्कृत्य कृतं भस्मास्थिधारणम् ॥६१॥
बाह्यचिह्नमिदं देवि मोहनार्थाय विद्विषाम् ॥
अथान्तर्हृदये नित्यं ध्यात्वा देवं जनार्दनम् ॥
जपन्नेव च तं मंत्रं तारकं ब्रह्मवाचकम् ॥
सहस्रनामसदृशं विष्णोर्नारायणस्य तु ॥
षडक्षरमहामंत्रं रघूणां कुलवर्धनम् ॥
जपन्वै सततं देवि सदानंदसमाप्लुतम् ॥

विष्णुना रुद्रस्य मोहनार्थं आज्ञाकरणं-

मां चोवाच यथा मत्तः पूज्यः श्रेष्ठो भविष्यसि ॥१०५॥
त्वामाराध्य तथा शंभो गृहीष्यामि वरं सदा ॥
द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥ १०६ ॥
स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान्कुरु ॥
मां च गोपय येन स्यात् सृष्टिरेषो (त्तराधरा) त्तरोत्तरा १०७
ततस्तं प्रणिपत्याहमवोचं परमेश्वरम् ॥
ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथंचन ॥१०८॥
न पुनस्तदविज्ञानं कल्पकोटिशतैरपि ॥

तस्मान्मया कृता स्पर्धा पवित्रः स्यां कथं हरे ॥१०९॥

तन्मे कथय गोविंद प्रायश्चित्तं यदीच्छसि ॥

ततः प्रसन्नो भगवानवोचत्तत्त्वमात्मनः ॥११० ।

तमेव तपसा नित्यं भजामि स्तौमि चिंतये ।

तेनाद्वितीयमहिमा जगत्पूज्योऽस्मिपार्वति ॥१११ ।

वाराहे ७० अध्यायेऽगस्त्यं प्रति रुद्रवचनम्—

ते तं प्रणम्य देवेशं ऊचुश्च परमेश्वरं ॥

देवदेव जनः सर्वो मुक्तिमार्गे व्यवस्थितः । ३३॥

कथं सृष्टिश्च भविता नरकेषु च को वसेत् ।

एवमुक्तस्ततो देवैस्तानुवाच जनार्दनः ॥ ३४ ॥

युगानि त्रीणि बहवो मामुपेष्यन्ति मानवाः ।

अंते युगे प्रविरला भविष्यंति मदाश्रयाः ॥

एष मोहं सृजाम्याशु योजनं मोहयिष्यति ।

त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥

[ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।

प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ]

अल्पायासं दर्शयित्वा मोहयाशु सुरेश्वर ॥

एवमुक्त्वा तदा तेन देवेन परमेष्ठिना ॥

आत्मा तु गोपितः सद्यः प्रकाशोऽहं कृतस्तदा ॥

तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तम ॥

शास्त्रेष्वभिरतो लोको बाहुल्येन भवेदतः ।

( वाराहपुराणे अ० ७० )

पुराणानां राजसतामससात्त्विकभेदेन त्रैविध्यम् । सात्त्विकपुराणस्य मोक्षजनकत्वं राजसपुराणस्य स्वर्गजनकत्वं तामसपुराणनिरयप्राप्तिहेतुत्वं—

माल्स्यं कौर्मं तथा लैङ्गं शैवं स्कांदं तथैव च ॥ ८१ ॥
आग्नेयं च षडेतानि तामसानि निबोध मे ॥
वैष्णवं नारदीयं च तथा भागवतं शुभम् ॥ ८२ ॥
गारुडं च तथा पाद्मं वाराहं शुभदर्शने ।
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥ ८३ ॥
ब्रह्मांडं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ॥८४॥
सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ।
तथैव तामसा देवि निरयप्राप्तिहेतवः ॥ ८५ ॥

स्मृतीनामपि त्रैविध्यं त्रिविधफलजनकत्वं—

तथैव स्मृतयः प्रोक्ता ऋषिभिस्त्रिगुणान्विताः ।
सात्त्विका राजसाश्चैव तामसाः शुभदर्शने ॥ ८६ ॥
वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा ।
भारद्वाजं काश्यपं च सात्त्विका मुक्तिदाः शुभा॥ ८७ ॥
याज्ञवल्क्यं तथात्रेयं तैत्तिरिं दाक्षमेव च ।
कात्यायनं वैष्णवं च राजसाः स्वर्गदाः शुभाः ॥ ८८ ॥
गौतमं बार्हस्पत्यं च सांवर्तं च यमं स्मृतम् ।
शांखं चौशनसं देवि तामसा निरयप्रदाः ॥ ८९ ॥
किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि ।

तामसा नरकायैव वर्जयेत्तान्विचक्षणः ॥ ९० ॥

एतत्ते सर्वमाख्यातं प्रसङ्गाच्छुभदर्शने ।

शेषां च प्रभवावस्थां हरेर्वक्ष्यामि तेश्रृणु ॥ ९१ ॥

मात्स्यपुराणे ५३ अध्याये पुराणानां त्रैविध्यं तत्प्रतिपाद्यदेवतानामपि त्रैविध्यम्

सात्विकेषु पुराणेषु माहात्म्यमधिकं हरेः ॥

राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥

तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ॥

संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ॥

२९० अध्याये कल्पानां राजसादिभेदः तामसे कल्पे रुद्रादिःस्तूयते राजसे चतुर्मुखः सात्विके विष्णुः स्तूयते ।

संकीर्णास्तामसाश्चैव राजसा सात्विकास्तथा ॥

रजस्तमोमयास्तद्वत् एते त्रिंशदुदाहृता ॥

संकीर्णेषु सरस्वत्याः पितॄणां व्युष्टिरुच्यते ॥

( व्युष्टिः = स्तुतिः )

अग्नेःशिवस्य माहात्म्यं तामसेषु प्रकीर्तितं ॥

राजसेषु तु माहात्म्यमधिकं ब्रह्मणः स्मृतम् ॥

यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ॥

तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ।

सात्विकेष्वधिकं तद्वत् विष्णोर्माहात्म्यमुत्तमम् ॥

देवानां दैवतं विष्णुः दानवानां त्रिशूलधृक् ॥

कूर्मपुराणे उत्तरार्धे--४५ अध्याये

सात्विकराजसतामसभेदः सात्विककल्पे विष्णोर्माहात्म्यं राजसे चतुर्मुखस्य तामसे च रुद्रस्य माहात्म्यं प्रकीर्त्यते ।

असंख्यातास्तथा कल्पाः ब्रह्मविष्णुशिवात्मकाः ॥
कथिता हि पुराणेषु मुनिभिः कालचिंतकैः ॥
सात्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ॥
तामसेषु हरस्योक्तं राजसेषु प्रजापतेः ॥
योयं प्रवर्तते कल्पः वाराहः सात्त्विको मतः ॥

प्रह्लाद उवाच—

यो वै सर्वोपनिषदामर्थः पुरुष ईश्वरः ।
तं वै सर्वगतं विष्णुं नमस्कृत्वा ब्रवीमि ते ॥ १८ ॥

रुद्र उवाच—

इति विष्णुस्तवं श्रुत्वा दैत्यराड् विस्मयान्वितः ।
उवाच तं गुरुं रोषात्किं त्वयोक्तं ममात्मजे ॥ १९ ॥
प्राह दैत्यानसौ विप्रो वध्यतामिति राक्षसः ॥ २१ ॥
इत्युक्ता राक्षसाः क्रुद्धाः कंठनेषणरज्जुभिः ।
बबंधुस्तं द्विजवरं भृशं दैत्येश्वराज्ञया ॥ २२ ॥
वध्यमानं गुरुं दृष्ट्वा प्रह्लादो ब्राह्मणप्रियः ।
उवाच पितरं तात इदं मे नोक्तवान्गुरुः ॥२३॥
कृपया देवदेवस्य शिक्षितोस्मि हरेः प्रभोः ॥
नान्यो गुरुर्मे वदति स एव प्रेरको हरिः ॥
श्रोता मंता तथा वक्ता द्रष्टा सर्वग ईश्वरः ॥

हरिरेवाक्षयः कर्ता नियन्ता सर्वदेहिनाम् ॥
तस्मादनागसो विप्रो मोक्तव्यो मे गुरुः प्रभो ॥

रुद्र उवाच—

इति पुत्रवचः श्रुत्वा हिरण्यकशिपुस्ततः ॥
तं ब्राह्मणं मोचयित्वा स्वसुतं प्राह विस्मयात् ॥२६॥

हिरण्यकशिपुरुवाच—

किं वत्स त्वं भ्रमस्येवं मिथ्यावाक्यैर्द्विजन्मनः ॥
को विष्णुः किं तु तद्रूपं कुत्रासौ संस्थितो हरिः ॥२७॥
अहमेवेश्वरो लोके त्रैलोक्याधिपतिर्मतः ॥
मामेवार्चय गोविंदं त्यज शत्रुं दुरासदम् ॥ २८ ॥
अथवा शंकरं देवं रुद्रं लोकगुरुं प्रभुम् ॥
अर्चयस्व सुराध्यक्षं सर्वैश्वर्यप्रदं शिवम् ॥ २९ ॥

भस्मधारणपूर्वकरुद्रपूजनादेः पाशुपतागमानुयायितामसदैत्याद्यनुष्ठेयत्वकथनं—

त्रिपुण्ड्रधारणं कृत्वा भस्मना दैत्यपूजितम् ॥
पूजयित्वा महादेवं पाशुपतोक्तमार्गतः ॥ ३० ॥

रुद्र उवाच—

इति दैत्यपतेर्वाक्यं श्रुत्वा दैत्यपुरोहिताः ॥ ३१ ॥

पुरोहिता ऊचुः—

एवमेव महाभाग कुरुष्व वचनं पितुः ॥
त्यज शत्रुं कैटभारिं पूजयस्व त्रिलोचनम् ॥ ३२ ॥

रुद्रात्परतरो देवो नास्ति सर्वप्रदो नृणाम् ॥
पिता तवापि तस्यैव प्रसादादीश्वरोऽभवत् ॥ ३३ ॥

रुद्र उवाच—

इति तेषां वचः श्रुत्वा प्रह्लादो जन्मवैष्णवः ॥ ३४ ॥

प्रह्लाद उवाच-

अहो भगवतः श्रैष्ठ्यं यन्मायामोहितं जगत् ॥
अहो वेदान्तविदुषः सर्वलोकेषु पूजिताः ॥ ३५ ॥
ब्राह्मणा अपि चापल्याद्वदन्त्येवं मदान्विताः ॥
नारायणः परं ब्रह्म तत्त्वं नारायणः परम् ॥ ३६ ॥
तेनैव सृष्टौ ब्रह्मेशौ सर्वदेवोत्तमावुभौ ॥
तस्यैवाज्ञां पुरस्कृत्य वर्तेते ब्रह्मशंकरौ ॥ ४० ॥
तं सर्वरक्षकं देवं त्यक्त्वा सर्वेश्वरं हरिम् ॥
कथं पाषण्डमाश्रित्य पूजयामि च शंकरं ॥ ४५ ॥
स एव रक्षकः श्रीशो देवानामपि सर्वदा ॥
तमेव पूजयिष्यामि लक्ष्म्या संयुतमीश्वरम् ॥
प्राप्स्यामि सुसुखेनैव तद्विष्णोः परमं पदम् ॥ ५१ ॥

भस्मधारणादेःशापमूलत्वंतत्रगौतमशापप्रकारः—

शशाप तान्जटाभस्मदीक्षाव्रतधरास्तथा ।
त्रिपुण्ड्रधारिणो नित्यं भस्मोद्धूलनतत्पराः ॥
भविष्यथत्रयीं त्यक्त्वामिथ्याज्ञानप्रलापिनः ।
बौद्धे चाप्यार्हते चैव तथा पाशुपतेऽपिच ॥

शांभवे दीक्षिता यूयं भवत ब्राह्मणाधमाः (वाराहे ७१ अध्याये)
शशाप तान् जटाभस्ममिथ्याव्रतधरास्तथा ।
भविष्यथ त्रयीबाह्या वेदकर्मबहिष्कृताः ॥

भागवते भृगुशापः—

भवव्रतधरा येच ये च तान् समनुव्रताः ॥
पाखंडिनस्ते भवंतु सच्छास्त्रपरिपंथिनः ॥
नष्टशौचा मूढधियः जटाभस्मास्थिधारिणः ॥
विशंतु शिवदीक्षायां यत्र दैवं सुरासवम् ॥

पाद्मे उत्तरखंडे २८२ अ० भृगुशापः—

रुद्रभक्ताश्च ये लोके भस्मलिंगास्थिधारिणः ॥
ते पाषंडत्वमापन्ना वेदबाह्या भवन्तु वै ॥ ३५ ॥

ब्राह्मणानां भस्मधारणनिषेधकप्रमाणानि० हारीतस्मृतिः—

रुद्रार्चनाद्ब्राह्मणस्तु शूद्रेण समतां व्रजेत् ।
रुद्रार्चनं त्रिपुण्ड्रस्य धारणं यत्र दृश्यते ॥
तच्छूद्राणामिति प्रोक्तं न द्विजानां कथंचन ।
न भस्म धारयेद्विप्रः परमापद्गतोऽपि वा ।
मोहाद्वै विभृयाद्यो वै स सुरापो भवेद्ध्रुवम् ।
तिर्यक्पुण्ड्रधरं विप्रं पट्टाकारधरं तथा ।
श्वपाकमिव नेक्षेत न संभाषेत कुत्रचित् ॥
तस्माद्द्विजातिभिर्धार्यं ऊर्ध्वपुण्ड्रं विधानतः ।
मृदा शुभ्रेण सततं सान्तरालं मनोहरम् ॥

श्राद्धं होमः तथा दानं स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्वं ऊर्ध्वपुण्ड्रं बिनाकृतम् ।
ऊर्ध्वपुण्ड्रं बिना यस्तु श्राद्धं कुर्वीत स द्विजः ॥
तत्सर्वं राक्षसैर्नीतं नरकं चाधिगच्छति ।
ऊर्ध्वपुण्ड्रविहीनं तु यः श्राद्धे भोजयेद् द्विजम् ॥
अश्नन्ति पितरस्तस्य विण्मूत्रं नात्र संशयः ॥
तस्मात्तु सततं धार्यमूर्ध्वपुण्ड्रं द्विजन्मना ।
धारयेन्न तिर्यक्पुण्ड्रमापद्यपि कदाचन ।
तिर्यक्पुण्ड्रधरं विप्रं चण्डालमिव संत्यजेत् ।
सोऽनर्हः सर्वकृत्येषु सर्वलोकेषु गर्हितः ॥
ऊर्ध्वपुण्ड्रविहीनः सन्संध्याकर्म समाचरेत् ।
सर्वं तद्राक्षसैर्नीतं नरकं चाधिगच्छति ।
यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रविवर्जितम् ।
द्रष्टव्यं नैव तत्किंचिद्दृच्छ्मशानमिव तद्भवेत् ।

चंद्रिकायां—

श्रौतस्मार्ताः क्रियाः सर्वाः ह्यूर्ध्वपुण्ड्रमकुर्वतः ।
जायंते विफलाः ब्रह्मन बाधिताश्च भवन्ति ताः ॥
संध्याकाले जपे होमे स्वाध्याये पितृकर्मणि ॥
श्राद्धकाले विशेषेण कर्ता भोक्ता च न त्यजेत् ।

पाद्मे—

ऊर्ध्वपुण्ड्रविहीनस्तु यः श्राद्धे भोजयेद्द्विजः ॥
अश्नंति पितरस्तस्य विण्मूत्रं नात्र संशयः ॥

ऊर्ध्वपुंड्रविहीनस्तु यः श्राद्धं कुरुते द्विजः ॥
सर्वं तद्राक्षसैर्नीतं नरकं चाधिगच्छति ॥

हेमाद्रौ--

तिर्यक्पुण्ड्रं तथा दृष्ट्वा स्कंधे मालां तथैव च ॥
निराशाः पितरो यांति दृष्ट्वा च वृषलीपतिं ॥

वैवस्वतयमः--

त्रिपुण्ड्रेण तु संयुक्तो यः श्राद्धं कुरुते द्विजः ॥
राक्षसास्तद्विलुंपंतीत्याह वैवस्वतो यमः ॥
विप्रान्निमंत्रयित्वा तु त्रिपुंड्रं यस्तु धारयेत् ॥
स कर्ता नरके घोरे पितृभिस्सह मज्जति ॥

ब्रह्मराते--

बालेंदुवत् क्षत्रियाणां वैश्यानां वर्तुलाकृति ॥
त्रिपुंड्रं शूद्रजातीनां विधिरेषः सनातनः ॥
ब्राह्मणस्योर्ध्वपुंड्रं स्यात् क्षत्रियस्यार्धचंद्रकम् ॥
वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुंड्रकम् ॥

वसिष्ठसंहितायाम्--

यत्तु रुद्रार्चनं प्रोक्तं त्रिपुंड्रं वापि सत्तमाः ॥
तदब्राह्मण्यविषयं न तु विप्रस्य कर्हिचित् ॥
न त्रिपुंड्रं द्विजैर्धार्यं पट्टिकाकारमेव च ॥
न चान्यदेवताभक्तिरापद्यपि कदाचन ॥

ब्रह्मांडपुराणे—

त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणांच विधीयते ॥

बृहत्पाराशरसंहितायां २५३ अध्याये—

ऊर्ध्वपुंड्रविहीनस्तु संध्याकर्मादिकं चरेत् ॥
तत्सर्वं राक्षसैर्नीतं नरकं चाधिगच्छति ॥ १३ ॥
ऊर्ध्वपुंड्रविहीनस्तु किंचित्कर्म करोति यः ॥
इष्टापूर्तादिकं सर्वं निष्फलं स्यान्न संशयः ॥ ११ ॥
यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रविवर्जितम् ॥
द्रष्टव्यं नैव तत्किंचिच्छ्मशानसदृशं भवेत् ॥ १२ ॥
ऊर्ध्वपुंड्रधरो विप्रो मृदा शुभ्रेण वैदिकः ॥
न तिर्यग्धारयेद्विद्वानापद्यपि कदाचन ॥ १४ ॥
विप्राणामूर्ध्वपुड्रं स्यात्तिलकं तु महीभृतः ॥
पट्टाकारं तु वैश्यानां शूद्राणां तु त्रिपुण्ड्रकम् ॥१५॥
ऊर्ध्वपुंड्रं मृदा कार्यं कस्तूर्या तिलकस्तथा ॥
पदाकारं तु गंधेन भस्मनैव त्रिपुंड्रकम् ॥ १६ ॥
ऊर्ध्वपुंड्रं तु सर्वेषां न निषिद्धं कथंचन ॥
धारयेत् क्षत्रियाद्योपि विष्णुभक्तो भवेद्यदि ॥१७॥
ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि ॥
वर्जयेत्तादृशं देवि मद्योच्छिष्टं घटं यथा ॥ १९ ॥
त्रिपुड्रं शूद्रकल्पानां शूद्राणां च विधिं तथा ॥
त्रिपुंड्रधारणाद्विप्रः पतितः स्यान्न संशयः ॥ २० ॥

यच्चात्र चिन्नस्वामिना स्वोदाहृतानां पातालखंडगतचतुरधिक-शततमाध्यायांतर्गतानां 'भस्मोत्पत्तिमहाभागे' त्यादिवाक्यानां असंजातविरोधित्वभ्रमेणोत्तरखंडगतानां त्रिपुण्ड्रनिषेधकवचनानां प्रामाण्यमभिहितं तत् पद्मपुराणानवलोकनविजृम्भितं । यतःपातालखंडगतैकोनाशीतितमे अध्याये तत्पूर्वतनब्रह्मखंडगतैकविंशेऽध्याये च त्रिपुण्ड्रनिषेधकानि वचनानि समुपलभ्यन्ते । सति चैवं असंजातविरोधित्वन्यायःभस्मधारणप्रतिकूलःत्रिपुण्ड्रनिषेधकवाक्यप्राबल्यसमर्पकश्चेतितथाहि—

ब्रह्मखण्डे २१ अध्याये—

ऊर्ध्वपुंड्रविहीनस्तु किंचित्कर्म करोति यः ॥
निष्फलं कर्म तत्सर्वं सत्यमेतन्मयोच्यते ॥९॥
यच्छरीरं मनुष्याणामूर्ध्वपुंड्रं विना कृतम् ॥
तद्दर्शनं न कर्तव्यं दृष्ट्वा सूर्यं निरीक्षयेत् ॥१०॥

पातालखंडे ७९ अध्याये—

यस्योर्ध्वपुंड्रं दृश्येत ललाटे न नरस्य हि ॥ २३ ॥
तद्दर्शनं न कर्तव्यं दृष्ट्वा सूर्यं निरीक्षयेत् ॥
त्रिपुण्ड्रं यस्य विप्रस्य ऊर्ध्वपुंड्रं न दृश्यते ॥२४॥
तं दृष्ट्वाप्यथवा स्पृष्ट्वा सचैलं स्नानमाचरेत् ॥ २५ ॥

यदपि हनुमतो भस्मधारणपूर्वकं शिवार्चनकथनं तदपि पातालखंडगतचतुश्चत्वारिंशदध्यायीयैः हनुमत्कृतरुद्रविपद्दशावेदकैर्वचनैर्विरुद्धत्वादनुपादेयमेव पा० खं० ४४ अध्याये ।

तथाहि—

आगत्य सविधे रुद्रं समरांगणमूर्धनि ॥
जगाद हनुमान् वीरः संजिहीर्षुः सुराधिपं ॥ १ ॥

हनूमानुवाच--

त्वं यदाचरसे रुद्र धर्मस्य प्रतिकूलनम् ॥
तस्मात्त्वां शास्तुमिच्छामि रामभक्तवधोद्यतम् ॥
मया श्रुतं पुरा वेदऋषिभिर्बहुधोदितं ॥
रघुनाथपदस्मारी नित्यं रुद्रः पिनाकभृत् ॥ ३ ॥
लांगूलेन च संवेष्ट्य ताडयत्येष भूतपम् ॥
शिलाभिः पर्वतैर्वृक्षैः पुच्छास्फोटेन भूरिशः ॥
नंदी प्राप्तो महात्रासं चंद्रोपि शकलीकृतः
अत्यंतं विह्वलो जातो महेशानः प्रकोपनः ।
क्षणे क्षणे प्रहारेण विह्वलं कुर्वतं भृशम् ॥
जगाद प्लवगाधीशं धन्योसि रघुपानुग ।
एवं ब्रुवंतं तं दृष्ट्वा हनूमान्निजगाद तं ।
प्रहसन्निर्भिया वाचा महेशानं तु तोषितं ॥

इति इत्थं चच्चिन्नस्वाम्युदाहृतं वचनं तत्तु मोहक तामस पुराणांतर्गतकथानुवादरूपमेव तथा हि—

शंकर उवाच —

अहं शम्भुरिति ख्यातो विप्रो हिमगिरिस्थितः ।
द्रष्टुं च राघवं गच्छे मम कार्यं महत्ततः ॥
मामाह्वयति राजासौ पुराणश्रवणे रतः ॥ इति ॥

तस्मात् भस्मत्रिपुण्ड्रधारणपराणां शिवादिपारम्यपराणां च वचनानां तामसजनामोहनेन तेषामधोगतिसंपादकत्वात् वेदतदनुसारिशिरोरत्नभूतं विष्णुमेव तदीयचिह्नधारणपुरस्सरमाराध्य तत्पारम्यमेव ध्यायंतस्सात्विका तत्प्रसादबललभ्यःनिजस्वरूपानं

दानुभव लक्षणमोक्षभाजो भवितारो नान्ये इति च अवगम्यते पातालखंडगतेन ६३ अध्यायगतेन श्लोकेन ॥

'स्युर्मोहाय चराचरस्य जगतस्ते ते पुराणागमाः ।
तां तामेव हि देवतां परमिकां जल्पंति कल्पे विधौ ॥
सिद्धांते पुनरेक एव भगवान् विष्णुः समस्तागम-
व्यापारेषु विवेकिनां व्यतिकरं नीतेषु निश्चीयते' ॥ इति ॥

यच्च शुक्लस्य

"रुद्राक्षधारणात्सद्यः सर्वपापैः प्रमुच्यते ॥
रुद्राक्षमूलं तद्ब्रह्म तन्नालं विष्णुरेव च" ॥ इति (रु० उ०)

"तज्ज्ञानं केनोपायेन जायते विभूतिधारणादेव" । इति (जा० उ०)

इति श्रुतिप्रतिपादितस्य निंदनात्स्वस्य वेदबाह्यताख्यापकमेवेति ।

यदपि हाराणभट्टस्य रुद्राक्षजाबालोपनिषदि तथा बृहज्जाबालोपनिषदि भस्मधारणमुक्तमित्येवं बृहज्जाबालरुद्राक्षजाबालजाबालि वचनानां श्रुतित्वकथनं तत्तु वाराहपुराणोक्तं कालांतरे पाशुपत-शास्त्रस्थं वेदसंज्ञाप्रापणं इतो बहोः कालात् संभवन्नेदानीमास्माकीनंदृष्टिपथमाव्रजेत् इति संभावितमपीदानीमेवैतैः पंडितैः, दृष्टिपथमानीतमित्येकतः परिखेदयति अपरतश्च पुराणानि प्रत्यक्ष संवादमासादयंत्यप्रामाण्यशंकाविषयतामपि नाश्नुवंत इति परितोषयति च । तथाहि वाराहे अगस्त्यं प्रति रुद्रवचनं—

"भजंते मोहशास्त्रं ये ते यांति नरकं नराः ॥
ये वेदमार्गनिर्मुक्ता तेषां मोहार्थमेव च ॥
नयसिद्धांतसंज्ञाभिर्मया शास्त्रं तु दर्शितं ॥
पाशोयं पशुभावस्तु स यदा पतितो भवेत् ॥
तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितम् ।

वेदमूर्तिरहं विप्रा नान्यशास्त्रार्थवादिभिः॥
ज्ञायते मत्स्वरूपं तु मुक्त्वा देवमनादिमत्॥
(७० अ० श्लो० ४३)

तथा चोक्तवराहपुराणेन भस्मधारणबोधकानां तांत्रिकरहस्यार्थप्रतिपादकतामात्रेणोपनिषद्व्यवहारविषयाणामप्यवेदत्वस्यैव सिद्धिया भस्मधारणविषये वेदत्वेनैतेषामुदाहरणमनुपपन्नमेवैतेषां पंडितप्रवराणामिति। दृश्यते च पौरुषेयत्वेन संप्रतिपन्नेषु भगवद्गीतेश्वरगीतादिग्रंथेषु उपनिषद्व्यवहारः अत एव (पाशुपतांतर्गतत्वादेव) पाशुपतशास्त्रप्राप्ताः रुद्रपूजनादिधर्मा एवात्र प्राधान्यं लभंते तथा जीवाः पशवः पशुपतिः व्रतमेतच्छांभवं इत्यादि पाशुपतसंवादश्च।

न केवलं भस्मधारणं श्रुतिषु न विहितमित्येवापि तु तासु निषिद्धमपीत्याहतुः पार्वतीपरमेश्वरौ—

"कपालभस्मास्थिधरा ये ह्यवैदिकलिंगिनः॥
कपालचर्मभस्मास्थिधारणं श्रुतिगर्हितम्॥
यस्मात्पशुपतिश्चाहं मत्कृताः शास्त्रविस्तराः॥
सर्वे पाशुपता ज्ञेयाः वेदमार्गविरोधिनः" इत्यादिना।

तदेवं निर्विशंकं भस्मादिधारणस्य श्रुतिप्रतिपाद्यत्वाभावं श्रुतिविरुद्धतां च कथयत्सु पार्वतीपरमेश्वरभृगुगौतमप्रह्लादादिषु इदमेवानुवदत्सु वसिष्ठवादरायणादिषु अंगीकुर्वति च हिरण्यकशिपौ पाशुपतसिद्धतां भस्मादिधारणस्य श्रौततामुपपादयितुं प्रयतमानानामेतेषां विदुषां साहसं अकिंचित्करं शंकराचार्या अपि माहेश्वरास्तु मन्यंते इत्यादिना 'पत्युरसामंजस्यात्' इति सूत्रभाष्ये वेदविरुद्धभस्मादिधारणव्रतप्रतिपादकपाशुपतशास्त्रं निराचक्रुर्व्याचक्रुश्च वाचस्पतिमिश्रा अपि माहेश्वराश्चत्वारः शैवाः पाशुपताः कारु-

णिकसिद्धांतिनः कापालिकाश्चेति । विधिस्त्रिषवणस्नानादिरिति अपेयेदीक्षिता अपि धर्मार्थव्यापारो विधिः सव्रतद्वाररूपेण द्विविधः भस्मस्नानभस्मशयनोपहारादिव्रतं इति ।

अतएव साक्षाच्छंकराचार्यशिष्यः पद्मपादाचार्योपि निरस्तभूतिमिति विशिनष्टिस्म शंकराचर्यान् तद्वर्णनपरे 'नमाम्यभोगिपरिवारसंपदं निरस्तभूतिमनुमार्धविग्रहं ।' इति पद्ये भस्मविभूषितगात्रेण रुद्रेण वैधर्म्यप्रतिपिपादयिषया ।

तथा महाभारतनीलकंठव्याख्याने तिर्यकपुंड्रादिबोधकानां पौरुषेयवाक्यानामप्रामाण्यशंकायां 'आनिम्रुचः शकृदेको अपाभरत्' इति मंत्रलिंगानुमितविधिमूलत्वात्प्रामाण्यमित्युक्त्वा त्रिपुंड्रभस्मधारण विषये विधिः कथमेतन्मंत्रलिंगेनानुमीयते अस्मिन्मंत्रे भस्मधारणबोधकपदाभावादित्याशंक्य मंत्रस्यशकृत्पदस्य भस्मार्थकत्वं बृहज्जाबालरूपोपबृंहणानुसारेण करणीयं इत्युक्तं नीलकंठेन यदि बृहज्जाबालोपनिषदः वेदत्वं मन्येत तर्हि स्पष्टं भस्मधारणविधायकैतद्वाक्यमेव भस्मधारणबोधकपौरुषेयवचनस्य मूलमिति उच्येत न तु बृहज्जाबालवाक्यानुसारेण मंत्रगतशकृच्छब्दस्य भस्मार्थकत्वमनुमाय तेन च तस्य मंत्रस्य भस्मधारणबोधकत्वं च अनुमाय तेन भस्मधारणविधायकवेदवाक्यं कल्पयित्वा तन्मूलत्वाद्भस्मधारणबोधकपौरुषेयवचनानां प्रामाण्यं नानुमीयेत अनुमितं च परंपरया तेन ज्ञायते बृहज्जाबालोपनिषत् न वेदांतर्गता किन्तु तांत्रिकग्रंथांतर्गतरहस्यभाग एवेति ।

यत्तु भस्मत्रिपुंड्रधारणविषये प्रमाणतया शुक्लयजुर्वेदवचस उदाहरणं चिन्नस्वामिनः 'त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं' इति तदेतदुपहासास्पदं मंत्रस्यास्य कल्पसूत्रोदाहरणपूर्वकं उवटभाष्ये महीधरभाष्ये च वपने विनियोगकथनपूर्वकं आयुः प्रार्थनारूपार्थवर्णनात् ।

यजमानो मुण्ड्यमानो जपति त्र्यायुषं उष्णिक् लिंगोक्ता देवता त्रीण्यायूंषि समाहृतानि बाल्ययौवनस्थविराणि त्र्यायुषं यज्जमदग्नेः त्र्यायुषं यच्च काश्यपस्य यच्च देवेषु तन्नो अस्तु तदस्माकं भवतु त्र्यायुषमित्याशीः ( उव्वटभाष्य ) त्र्यायुषमिति यजमानो जपति ( का ५-२-१६ ) सोऽयं जपः वपनकालीनः जमदग्नेः मुनेः यत्त्र्यायुषं त्रयाणां बाल्ययौवनस्थाविराणां आयुषां समाहारः इत्यादिना ।

अत्र भस्मवाचकशब्दाभावेन भस्मत्रिपुंड्रधारणकर्तव्यताबोधकविधेर्वा तत्तदनुमापकलिंगस्यवावोऽभावात् मन्त्रेणानेन भस्मशब्दोल्लेखरहितेनापि ललाटादिस्थानेषु भस्मधारणविषये आज्ञा दत्तेति मीमांसापंडितोऽयं कथमजल्पत् इति चित्रीयते चेतः संभाव्यते चाग्निमीलेपुरोहितमित्यादीनि सर्वाण्यपि वचांसि भस्मधारणे प्रमाणयिष्यतीति ।

किंचास्याहो वंचनचातुरी पंडितप्रवरस्य यदयं चतुर्भिर्भाष्यकारैः कर्कजयरामहरिहरगदाधरैः 'त्र्यायुषकरणमनुक्तमपि सूत्रकारेण' अत्रांगालंभनत्र्यायुषकरणाभिवादनानि ग्रन्थकारानुक्तान्यपि आचारतोऽनुष्ठेयानि' अत्र त्र्यायुषकरणं सूत्रकारानुक्तमपि प्रसिद्धत्वाच्छिष्यपरं पराचरितत्वात् क्रियते'। अत्रांगालंभनत्र्यायुषकरणाभिवादनानि गृह्यकारानुक्तान्यपि आचारतोनुष्ठेयानि इति वाक्यैःस्फुटमविसंवादं च सूत्रानंतर्गतत्वेन बोधितं भस्मना ललाटेग्रीवायां दक्षिणेंसे हृदि च त्र्यायुषमिति प्रतिमंत्रं इति वाक्यं पारस्करसूत्रगतमिति तेन च ललाटादिस्थानेषु भस्मधारणं विहितमिति च वदतीति ।

प्रत्युत 'सांवत्सरिकस्य चूडाकारणं' इत्युपक्रम्य 'अथ पश्चात्त्र्यायुषमिति' अथोत्तरतो येन भूरिश्चरादिवंज्योक्चपश्चाद्धि सूर्य तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तय इति सूत्रयन् पारस्करः मंत्रमिमं वपने विनियोजयतीति स्फुटमवगम्यते

तत्परिशीलिनां व्याख्यातं च भाष्ये पश्चिमगोदानकर्मणि त्र्यायुषमितिमंत्रेण सकेशतृणानां छेदनं कुर्यात् इति ।

यदपि 'प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने' इति वाक्यमुदाहृत्य वेदः भस्मशब्दोच्चारणपूर्वकं भस्मधारणं स्पष्टशब्दैराज्ञापयतीति कथनं मूढजनप्रतारणमात्रमेव तत्--विधिबोधकपदस्य तदनुमापकमंत्रलिंगस्य चाभावात्। अस्यापि मंत्रस्य कल्पसूत्रोदाहरणपूर्वकं सायणोवटमहीधरैर्भाष्यकारैः अर्थान्तरे विनियोगकथनाच्च ।

तथा हि तद्वाक्यानि ( कल्पः ) आपोदेवीः प्रतिगृह्णीतमस्मैतदिति सृभिः अप्सु भस्म प्रवेशयति भस्मनोपादाय प्रपीडय प्रसद्य भस्मनेति द्वाभ्यामुखायां प्रत्यवधाय 'पुनरूर्जा सहरय्या' इति पुनरुदैति ( निपीडितं भस्मोपेतायां मुखायामग्निं स्थापयेदित्यर्थः ) हे अग्ने भस्मना सह योनिं कारणभूतां पृथिवीं प्रसद्य किं पृथिवीमेव नेत्याह अपश्च योनिभूताः प्रतिपद्य किं च मातृभिरद्भिः पृथिव्या च संसृज्यैकीभूय त्वं ज्योतिष्मान् भूशं ज्योतिः संपन्नः पुनः पश्चात् आसदः स्वीयमेव स्थानं मुखामसीद ( सायणभाष्य ) अप आदत्ते प्रसद्येति चतसृभिराग्नेयीभिः प्रसद्य अवस्थाप्य भस्मना भस्मरूपेण योनिं स्थानं अपश्च पृथिवीं च हे अग्ने संसृज्य संगत्य च मातृभिरद्भिस्त्वं ज्योतिष्मान् भूत्वा पुनरस्या मुखायां आसदः आसीद ( उवटभाष्य ) अनामिकया प्रास्तादादत्ते प्रसद्येति प्रास्योरवायामुपतिष्ठते बोधाम इति(का.१६-६-२९-३०) अप्सु क्षिप्ताद्भस्मनः सकाशात् अनामिकया भस्म गृह्णाति प्रसद्येति चतुर्ऋग्भिः तडागादागत्य अनामिकया गृहीतं भस्म तूष्णीमुखायां प्राश्य बोधाम इति त्वृचेन उख्याग्निमुपतिष्ठते इत्यादि (महीधरभाष्यं)

तदेवं विध्यादिरहितं कल्पसूत्रकारादिभिरन्यत्र विनियुक्तं भस्मशब्दश्रवणमात्रेण स्वाभिमतशैवतंत्रसिद्धभस्मधारणविधिपरतया योजयन् महासाहसिकोयं 'जारंन कन्या अनूषत' 'पिबंतो मदिरं मधु' इत्यादिमंत्राणां तत्तदभितसुरापानजारत्वचोरत्वादिविधि

परत्वामुपवर्णयतो जनान् प्रति किं प्रतिब्रूयात् यदपि आह्निकसूत्रावलीकारः स्वग्रंथे नित्यस्नानप्रकरणे मंत्रमिममुद्धृत्य शुद्ध्यर्थं भस्म प्रलिप्य स्नातव्यं विना भस्मलेपनं स्नानं न सुसंपद्यते इति कथयतीति मंत्रस्यास्य भस्मधारणपरत्वमेवेति तदप्याह्निकसूत्रावलीपुस्तके प्रसद्य भस्मना स्नानमिति भागादौ अंते च क्षेपकं क्षेपकमिति पदयोर्विद्यमानत्वेन पंचाशत् वर्षेभ्यः अर्वाचीनेपि ग्रंथे केनचिद्दुराग्रहगृहीतेन नवीनतया प्रक्षिप्तमिति स्पष्टं एतत्पुस्तकद्रष्टॄणामिति असमंजसमेव एतदपि न दृष्टं चिन्नस्वामिना दुराग्रहपटलच्छन्नचक्षुषा प्राचीनविद्यारण्याद्यनभिहितं विनियोगं वर्णयन्नर्वाचीनीयमनवधेयवचनञ्चेति किं च स्नानांगतया कथ्यमानं भस्मलेपनं त्रिपुण्ड्रभस्मधारणमवगच्छन् शास्त्रिमहाशयः स्नानांगतया कथ्यमानेन गोमयेनापि त्रिपुण्ड्रधारणं नूनमचिरादेव कुर्यादिति।

किंच 'ग्राह्यंभस्मब्राह्मे—

गंगातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः।
बिभर्ति सोऽर्कस्य तेजस्तमोनाशाय केवलम्॥

इति ग्रन्थेन ग्राह्यभस्मकथनवेलायां गंगातीरमृत्तिकाधारणबोधकप्रमाणं 'भस्मधारणाभावे दोषः बृहन्नारदीये

स्नानं दानं जपो होमः संध्यास्वाध्यायकर्मसु।
ऊर्ध्वपुण्ड्रविहीनं चेत्तत्सर्वं निष्फलं भवेत्॥ इति॥
ललाटे तिलकं कृत्वा संध्याकर्म समाचरेत्।
अकृत्वा भालतिलकं तस्य कर्म निरर्थकं॥

इति भस्माधारणे दोषप्रतिपादकपदाघटितानि प्रत्युत प्रतिज्ञातविरुद्धानि उर्ध्वपुण्ड्रधारणविषयकानि प्रमाणानि च उदाहरतः आह्निकसूत्रावलीकारस्य पांडित्यं लोकविलक्षणमवगम्यते एतादृशीं आह्निकसूत्रावलीकृतादत्तां 'प्रसद्यभस्मने' ति मंत्रात् अप्रतीयमानामपि भस्मस्नानाज्ञां स्वयं स्वीकुर्वन् अन्यानपि स्वीकर्तुमुपदिशन्

च्छिन्नस्वामी 'त आसुराः स्वयं नष्टाः जगतः क्षयकारिण' इति श्लोकं स्मारयति ।

यच्चोक्तं 'सर्वशास्त्रस्य सारभूता उपनिषदपि अग्निरिति भस्मवायुरिति भस्म जलमिति भस्म स्थलमिति भस्म इत्यादि द्वारा समस्तप्रपंचस्य भस्मात्मकत्वं वदन् अनेन मंत्रेण भस्म अभिमंत्र्य धार्यमिति आज्ञां ददातीति तन्न युक्तं अस्मिन् मंत्रे भस्मधारणबोधकपदाभावात् ।

'भस्मधारणरूपार्थस्य पुष्टीकरणार्थं अग्निरित्यादिभिर्मन्त्रैः इत्यादि पुलस्त्योपि वक्तीति च यदुक्तं तदपि मंदं अग्निरित्यादिभिर्मंत्रैरित्यादिश्लोकेषु भस्मधारणस्यानुक्तेः तेन पुलस्त्येन पुष्टीकरणायोगात् यत्तु इदानीं स्मृतिरवलोक्यतां—

आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणं ।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतं ॥

( मनु० पराशर० )

आग्नेयादिषु पंचस्नानेषु भस्मस्नानं प्रथमं उत्तमं एकस्नानं प्रतिपाद्यते इति तदप्ययुक्तमेव—

मनुपराशरस्मृतौ अस्य श्लोकस्यानुपलंभात्—

तच्छलोके उत्तमताबोधकपदस्याभावाच्च ।

एतेन यदुक्तं बौद्धगयावासिना नरहरिगिरिणा स्मृतिसारसमुच्चये ऊर्ध्वपुंड्रधारणमश्रौतं भस्मत्रिपुंड्रधारणमेव वैदिकमित्यादि तदपास्तम् ।

तथा च उक्तानेकप्रमाणैः भस्मत्रिपुण्ड्रधारणस्य श्रुतिगर्हिततायाः पाशुपतमार्गानुसारि तामसजनाधिकारिकताया शूद्रशूद्रकल्पब्राह्मणाधिकारिकतायाश्च सिद्धेः न भस्मत्रिपुंड्रधारणं सात्त्विकवैदिकविषयमिति ।

---

# अद्वैतवादे सूत्रविरोधध्रौव्यम् ।

नाभावउपलब्धेरिति सूत्रस्य शंकराचार्योक्तादर्थादर्थान्तरवर्णनेनाद्वैतवादस्य सूत्रविरोधपरिहारकथनं, उक्तसूत्रार्थत्वेन शंकराचार्याभिमतस्यजगत्सत्यत्वरूपार्थस्याद्वैतवादविरोधिताव्यवस्थापकमिति अद्वैत्यभिमतजगन्मिथ्यात्वनिरासकमेवेदं सूत्रं शंकररीत्यापीति अद्वैतमतविमर्शकारीयोक्तेरुपोद्बलकमेवेति अत्रअद्वैतमतविमर्शकृता कृतज्ञतैव प्रदर्शनीया तथापि अनुचितमिदंसूत्रार्थवर्णनमिति दृष्यते । तथाहि "सतो ब्रह्मणः नाभावः कुतः उपलब्धेः सत्त्वेन प्रमाणात् प्रतीतेः इति यदुक्तं तत्तावदसंगतं अद्वैतिमते शुद्धब्रह्मणः प्रमाणजन्यसत्त्वप्रकारकप्रतीतिविषयत्वाभावस्य शांकरगीताभाष्य गौड़पाद कारिकातच्छांकरभाष्याद्वैतसिद्ध्यादिषु उक्तत्वेन निधर्मकत्वेन च त्वदुक्तहेतोरसिद्धेः । यच्च 'किंचित्सत् शून्यवादिनाऽवश्यमभ्युपेयं अन्यथाबाधो निःसाक्षिकः निरवधिकश्च स्यादितिसूत्रार्थं" इति तदप्यसंगतमेव । अद्वैतिमते साक्षिणः अविद्यावृत्तिप्रतिबिम्बितचैतन्यरूपत्वेन मरुमरीचिकावन्मिथ्यात्वाद्बाधकाले तस्य साक्षिणोऽभावाद्बाधस्य निःसाक्षिकत्वनिरवधिकत्वयोरवश्याभ्युपगन्तव्यत्वेन शून्यवादिनं प्रति तद्दोषदानस्यासंगतत्वात् । मिथ्याभूतस्य साक्षित्वबाधावधित्वयोरुपगमश्च शून्यवादिमतेऽपि मिथ्याभूतेन ससाक्षिकत्वसावधिकत्वयोः संभवेनाकिंचित्करएव । वस्तुतस्तु शून्यवादिनोऽपि शून्यस्य परमार्थसत्त्वं ज्ञानरूपत्वं चांगीकुर्वन्त्येवेतिन तन्मते बाधस्य ससाक्षिकत्वसावधिकत्वयोरनुपपत्तिः । तस्मान्नेदं सूत्रं ब्रह्मणःसत्त्ववर्णनपरं नापि बाधस्य ससाक्षिकत्वसावधिकत्ववर्णनपरमिति । यदपि 'बाह्ये च तर्कपीड्यत्वरूपसाधनस्य सत्वेन बाध्यत्वरूपोपाधेश्चासत्त्वेनेत्यादि वदत्यन्तमसंगतं बाह्ये जगति

त्वन्मतरीत्या बाध्यत्वरूपोपाधेः सत्त्वेन तदन्तर्भावेण साधनाव्या-पकत्ववर्णनस्यासंभवात् । जगति बाध्यत्वाभावे तस्यास्मदभिमता-बाध्यत्वस्यैव सिद्धेश्च "जगन्मिथ्यात्वसाधकमनुमानंदुष्ट' मित्यु-पसंहारोऽपि जगन्मिथ्यात्वसाधनाय प्रवृत्तस्य तद्विरुद्धोपसंहारेणो-पहास्यतामेवावेदयति ।

जगत् नास्ति अस्ति चेदपि ज्ञानातिरेकेण नास्ति इति विज्ञान-वादिना चोदिते तत्परिहारार्थं सूत्रं नाभावउपलब्धेरिति । तदर्थश्च जगतः अभावः न वक्तव्यः उपलब्धेरिति, जगतः ज्ञानातिरेकेणाभा-वोऽपि नवक्तव्यः जगतः ज्ञानातिरेकेणापि उपलब्धेः इत्युक्तं शांकरभाष्ये तथाचेदं सूत्रं ज्ञानातिरेकेण जगदभावं वदतां बौद्धानां यथा विरोधि (निराकरणपरं) तथा ज्ञानातिरेकेण जगदभावं वदतामद्वैतिनामपीत्युक्तं अद्वैतमतविमर्शे ।

अत्र यदाह शुक्लः विमताधीः नज्ञानव्यतिरिक्तालंबनाधीत्वा-त्स्वाप्नधीवत् तस्मान्न ज्ञानव्यतिरिक्तं सदिति प्राप्ते परिहारसूत्रे 'नाभाव उपलब्धेः' वैधर्म्याच्चनस्वप्नादिवत् इति अयमर्थः ज्ञानातिरिक्त-स्यार्थस्य नासत्वं किंतु व्यवहारदशाबाध्यार्थक्रियाकारित्वरूपस-त्त्वमेव उपलब्धेः ज्ञानातिरेकेण प्रमाणैरुपलब्धेः तथाचस्वप्नवैधर्म्योक्तिः बाध्यत्वरूपोपाधिप्रदर्शनाय स्वप्नधीर्बाध्येतितत्रसाध्यव्यापकता जाग्र-त्धीरबाध्येतितत्रसाधनाव्यापकत्वं, एवंचाभ्यांसूत्राभ्यां विज्ञानस्यै-वाकारविशेषोर्थइतिमतस्य दूषणेपि व्यवहारदशाबाध्यो ज्ञानातिरिक्तोर्थ इति मतस्यनदूषणमितिमंतव्यमिति" तत्त्वतितुच्छम् । उक्तरीत्या सूत्रार्थः किं शंकराचार्योक्तः किंवास्वकपोलकल्पितः नाद्यः भाष्ये तददर्शनात् । तथा हि तद्वाक्यानि, न खल्वभावो बाह्यार्थस्याध्यवसातुं शक्यते उपलब्धेरिति यत्र उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्युप-गन्तव्यः उपलब्धेरेवेतिच । न ह्येतेषु व्यवहारदशाबाध्येत्यादि शुक्लोप-

२ ]

दर्शितार्थबोधकं किमपि वाक्यं पश्यामः इति नापिद्वितीयः। शांकरभाष्यदिशानयोःसूत्रयोः बौद्धमतनिरासकत्वमिवाद्वैतिमतनिरासकत्वमपीत्यर्थिकाया अद्वैतमतविमर्शकारीयोक्तेः निःसारतायां उक्तसूत्रयोः स्वकपोलकल्पितार्थान्तरवर्णनस्याहेतुत्वात् प्रत्युत 'जाग्रद्धीरबाध्येति नतत्र साधनाव्यापकत्वम्' इति कथयता शुक्लेन जगतः अबाध्यत्व रूपपारमार्थिकत्वस्यैव साधितत्वेन अद्वैतमतविमर्शकारोक्तेः ससारतैव संपादितेति। अहो ! स्वाभिमतविरुद्धार्थसाधनचातुर्यमस्येति।

यदपि इदमत्र तत्त्वम् बाधउपाधिर्वाअनुमानस्यदूषकौ नागमस्य एवंचोपनिषदनुरोधेनजगन्मिथ्यात्वं कल्प्यतेतत्र न बाधोपाध्योर्दूषकत्वमिति तदप्यसत्। यद्यत्र अद्वैतमतविमर्शकाराः साधनप्रकारावैलक्षण्येन बौद्धमताद्वैतमतयोर्वैलक्षण्यं ब्रूयुः तदोक्तरीत्या कथंचिद्वैलक्षण्योपपादनंसंगच्छेत न चैवं किन्तु उभाभ्यामंगीकृतस्य जगन्मिथ्यात्वरूपप्रमेयस्यावैलक्षण्यादेव। एवं स्थितेमिथ्यात्वसाधनप्रकारवैलक्षण्योपपादनस्यासंगतत्वात् जगतः मिथ्यात्वबोधकोपनिषदः अभावाच्च।

यच्चोक्तम् वाक्यशेषप्रमाणान्तरसंवादार्थक्रियादिपरीक्षापरीक्षितस्य प्रत्यक्षस्य प्राबल्येन व्यवहारदशायामेवतद्विरुद्धार्थग्राहिणो यजमानः प्रस्तर इत्यादे स्तद्विरोधेन गौणत्वेपि अद्वैतागमस्य परीक्षितप्रमाणविरोधाभावेन मुख्यार्थत्वोपपत्तेः. प्रत्यक्षादिनाहि ब्राह्मस्य व्यावहारिक प्रामाण्यंसिद्धं तच्च नाद्वैतगमबाध्यं बाध्यतेतुतात्विकं तच्चनप्रत्यक्षादि नासिद्धमिति सर्वमनवद्यमिति।

तदप्यकिंचित्करं अस्माभिरपि परीक्षापरीक्षितेन कदाप्यबाधितत्वात् प्रबलेन च कर्तृत्वभोक्तृत्वसुखदुःखादिग्राहिणा साक्षिप्रत्यक्षेणैवागमानामापाततः प्रतीयमानाद्वैतपरतायास्त्याजितत्वात्। यदि परीक्षितप्रत्यक्षविरोधस्य स्फुटप्रतीयमानार्थात् अर्थान्तरवर्णनहेतुतामनुमन्यते शुक्लपंडितः तदा किं वक्तव्यं आपातप्रतीतार्थपरित्यागहेतुतायां,

यत्तुअद्वैतागमस्यः......'मुख्यार्थत्वोपपत्ते' रिति तदपि अद्वैत-वाक्यत्वेनाभिमतानां सर्वेषामेव लक्षणयैवाभेद्बोधकत्वमिति शंकराचार्यादिमतविरुद्धत्वादुपेक्ष्यं ।

यदप्यत्रहाराणभट्टाचार्यस्य ''सोयं देवदत्तः तत्त्वमसीत्यादौविशिष्टवाचकपदानामेकदेशपरत्वेऽपि नलक्षणा शक्त्युपस्थितयोर्विशिष्टयोरन्वयबोधानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरभेदान्वयाविरोधात्' इति वेदांतपरिभाषांप्रमाणीकृत्य अद्वैतवा क्यानां मुख्यार्थत्वोपवर्णनं तदप्यसंगतमेव 'नचविशेषणस्यबाधात्तत्रानन्वयो नतुविशेष्येलक्षणेतिवाच्यं परिभाषामात्रत्वापत्तेः इत्यादिनावेदांतक स्यलतिकायां मधुसूदनसरस्वतीभिर्विशेष्यमात्रस्यशक्त्याबोधस्यदूषितत्वात् ''ऐक्यंतयोर्लक्षितयोर्नवाच्ययोरित्यादिशांकरग्रंथेन शक्तिनिराकरणपूर्वकं लक्षणाव्यवस्थापनाच्च 'ब्रह्मण्यवाच्ये यो विद्वान्वाच्यताम धिगच्छति सनिस्त्रपोनिमित्तानांविरहैः प्रतिबोध्यतां इत्यद्वैतसिध्युक्त दिशावाच्यतवांगीकर्तुर्लज्जाशून्यत्वोक्तेश्च एतेनलक्षणापक्षस्यप्रौढवादत्वोक्तिरप्यपास्ता वेदांतपरिभाषायामेव 'यथावा तत्त्वमसीत्यादौतत्पदवाच्यस्यसर्वज्ञत्वादिविशिष्टस्यत्वंपदवाच्येनांतः करणविशिष्टेनैक्यायोगादैक्यसिध्यर्थं स्वरूपेलक्षणेतिसांप्रदायिकाः इति लक्षणापक्षस्यसांप्रदायिकाभिमतत्वोक्तेरसांगत्यापत्तेः नहिप्रौढवादः सांप्रदायिकमतत्वेननिर्दिश्यतेपरीक्षकैः एवशंकराचार्यैर्नदूष्येतचवाच्यतापक्षः, नहिदूषितःपक्षःसिद्धांतः व्यवस्थापितश्चप्रौढवादइतियुज्यते एवमद्वैतसिध्दौवाच्यत्वनिराकरणादपि स्फुटमवगम्यते प्रौढवादत्वाभावो लक्षणापक्षस्येति एवं गदाधरभट्टाचार्याअपि शक्तिवादादौ विशिष्ट शक्तिस्थलेविशेषणविनिर्मोकेणविशेष्यबोधं लक्षणयैवसमर्थयामासुरिति तद्ग्रंथपरिशीलिनां सुगमं ।

साक्षिणः अप्रामाण्ये वेदस्वरूपग्राहिश्रावणप्रत्यक्षं, वेदजन्यज्ञानं

तत्प्रामाण्यंच साक्षिणैव ग्राह्यमिति वेदस्वरूपतज्जन्यज्ञानतत्प्रामाण्या-द्यसिद्धिप्रसंगलक्षणपरीक्षासहकृतत्वं एवं भेदबोधकवाक्यसंवादलक्षण-परीक्षोपेतत्वमपि साक्षिणः इति कथं तद्विरुध्धानामद्वैतागमानां परीक्षितप्रमाणाविरुध्धत्वमिति । अपि च प्रामाण्यं हि ज्ञानेषु तत्करणेषु वा भवति न तदतिरिक्तेष्विति सार्वजनीनं । सतिचैवं प्रत्यक्षादिना बाह्यस्य व्यावहारिकप्रामाण्यं सिद्धं' इति वदन् स्वी-यामव्युत्पत्तिमेवाविष्करोति ।

प्रमाणानां व्यावहारिकवस्तुविषयकत्वं नास्ति । व्यावहारिक-प्रामाण्यं अप्रामाण्यं चेत्यनतिरिक्तमेव बाध्यस्य वस्तुनः व्यावहारि-कत्वं असत्त्वं चैकमेवेति भामतिकृताकल्पतरुकृताचउक्तं समर्थितं च बौध्धाभिमतव्यवहारिकपारमर्थिकसत्यद्वयकल्पनानिराकरणावसरेकु-मारिलभट्टेनापि, व्यवस्थापितंचान्यत्रास्माभिरपि इति-तत्रैवद्रष्टव्यं जाग्रत्पदार्थानां बाध्यत्व ( मिथ्यात्व ) कथनायप्रवृत्तस्यशुक्लस्य जाग्र-त्धीरबाध्येतितत्रसाधनाव्यापकत्वमितिवाक्येनजाग्रत्पदार्थानां अबा-ध्यत्वकथनं स्वव्याहतं ।

असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरं इति वचनं नाद्वैतवादमधि-कृत्य प्रवर्तते । ईश्वरस्य जगतश्च व्यवहारदशायामंगीकारादित्यादि यदुक्तं तदप्यसंबद्धं ।

व्यवहारदशायामंगीक्रियमाणस्य वस्तुनः शुक्तिरजतमरुमरी-चिकादिवत् बाध्यत्वां ( त्रैकालिकनिषेधप्रतियोगित्वां ) गीकारेणे-श्वरजगतोरसत्त्वस्यैवप्राप्तेः । यं असत्यशब्दं प्रयुज्य भगवानीश्वरः असत्यत्ववादिनो निंदति तमेव असत्य शब्दं जगति प्रयुंजानाः अद्वै-तिनः स्वेषांकथं कृष्णकृतनिंदाविषयतां परिहर्तुंप्रभवेयुः उक्तंचासत्यत्वं शंकराचार्यैः "असत्येन वेदान्तवाक्येन" इति एवं जगति अनृतपदप्र-योगः । शुक्तिरजतमरुमरीचिकादिदृष्टान्तकथनं च अद्वैतिनां जगतः

ईश्वरस्यचासत्यत्ववादित्वमेवावगमयतीत्युक्तगीताविरोधोऽद्वैतवाद-स्य वज्रलेपायते ।

यत्तु विवर्ताधिष्ठानत्वस्य ब्रह्मण्यंगीकारेणाप्रतिष्ठमित्यनेनाविरोधवर्णनं तदप्यसारं शून्यवादिमतेऽपि परमार्थसति शून्ये जगतः कल्पितत्वांगीकारात्तेषां निरधिष्ठानत्ववादित्वासंभवात् । प्रत्युत अधिष्ठानत्वाज्ञानोपहितत्वादिविशिष्टस्य मिथ्यात्वांगीकारादद्वैतिनामेव निरधिष्ठानत्ववादित्वं साधु संगच्छते इति विफल एवायं विरोधपरिहारायायास इति ।

एवं सद्विविक्तत्ववादिनस्तवासद्विलक्षणत्वोक्तिरप्यसंगतैव । सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन सत्त्वविरहेऽसत्त्वस्यैव परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वन्यायप्राप्तत्वेन पुनः असत्त्वविरहोक्तेर्व्याहतिदुष्टत्वात् ।

यश्च अनवस्थादयोदोषाः सत्तानिघ्नन्तिवस्तुनः अद्वैतिनां ते सुहृदः इति प्राचीनोक्तिमनुसृत्य व्याहतिमप्यनादृत्य मतश्रद्धामात्रेण सदसद्विलक्षणत्वं ब्रवीति स परीक्षकव्यवहारेषूपेक्ष्य एव इति । समानेऽपिबौद्धाद्वैतिनोः प्रपंचस्यासद्विविक्ततावादे उक्तनिंदावचनस्य बौद्धैकविषयतावर्णनानौचित्यं कथं नालोचितमनेन शुक्लपंडितेनेत्यालोचनीयं सुधीभिः । बौद्धानामसद्विविक्ततावादित्वं तु अवैदिकदर्शनसंग्रहपरिशीलिनां स्फुटमेव-दूषितं च भट्टैरपि परस्परविरुद्धयोरितिन्यायमनुसरद्भिः सदसद्विविक्तत्वकथनमद्वैतिनाम् ।

अपि चात्र 'सद्विविक्तत्ववादिनो मम' इत्यस्य नोपयोगं पश्यामः असत्यतावादित्वप्रयुक्तनिन्दावारणानुपयोगित्वात् । किन्तु असत्यत्ववादितासंपादकत्वेन प्रतिकूलत्वमेवेति ।

कश्चात्रेश्वरपदार्थः । किंच तद्द्रोहित्वं यदि ईश्वरपदार्थो विष्णुस्तर्हि तस्यसर्वोत्तमत्वसकलकल्याणगुणाकरत्वादिवर्णयन्तो माध्वाः

तत्कृपापात्राण्येव कथं तद्द्रोहिणः प्रत्युत लोके यथा राजाहमिति वा राजा न गुणाधिकः इतिवा वदन्तो राजद्रोहिणः राजदंड्याश्च तथा ईश्वरोऽहं ईश्वरो निर्गुणः श्ववराहादिरूपः विण्मूत्रादिरूपः इति वदन्तोऽद्वैतिन एव ईश्वरद्रुहः ईश्वरदंड्याश्चेति। यदि च पार्वतीपतिर्महेश्वरो विवक्षित ईश्वरपदेन तदापि तस्य विष्णुभक्ताग्रगण्यत्वं प्रायः सर्वगुरुत्वं विचित्रानेकशक्तिमत्त्वादिकमंगीकुर्वत एव माध्वा इति न ते ईश्वरद्रुहः। ऊरीकृतं च शंकराचार्यैरपि विष्णुभक्तत्वं रुद्रस्य "कृपापात्रं यस्य त्रिपुररिपुरंभोजवसतिः सुता जह्नोः पूता चरणनखनिर्णेजनजलम्। प्रदानं वा यस्य त्रिभुवनपतित्वं विभुरपि निदानं सोऽस्माकं जयति कुलदेवो यदुपतिः "इतिश्लोकेन भागवतेऽपि" यच्छौचनि:सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत्" इत्यादि। अपि तु पार्वती मिथ्या पार्वतीपतित्वं मिथ्या शिवो मिथ्या तस्य विचित्रशक्त्यादिकं मिथ्येति वदन्तस्तत्स्वरूपमेवापलपन्तोऽद्वैतिन एव ईश्वरद्रुहः। यथाहि कश्चन पुरुषः कस्यचिद्विषदानादिना संहारेच्छुः महादरप्रदर्शनपूर्वक तस्य पूजां कुर्वाणोऽपि द्रोह्येव भवति।

यत्तु यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यति॥ सर्वभूतेषु चात्मानंततोनविजुगुप्सते॥ यस्मिन्सर्वाणिभूतान्यात्मैवाभूत् विजानतः॥ तत्रकोमोहः कःशोकएकत्वमनुपश्यतः॥ इतिश्रुतेः इतितेकथमेत द्वाक्यविषयाभवेयुः इतिमात्सर्यमुत्सार्यस्वयमेव विचार्यतामिति तदपि श्रुत्यर्थापरिज्ञाननिबंधनमेव। तथा हि पूर्वमंत्रे पूर्वार्धेनात्मनः सर्वभूताधारत्वमुच्यते आधाराधेयभावश्च भेदव्याप्त इति शंकराचार्याणां सम्मतं इति पूर्वार्धं भेदपरमेव उत्तरार्धमपि परमात्मनः नियामकतया सर्वभूतेषु स्थितिं प्रतिपादयत् यः पृथिव्यां तिष्ठन् इत्यादिकमिव भेदपरमेव द्वितीयमंत्रोपि युगपत् नानास्थानस्थित्या प्राप्तामात्मनोऽनेकत्वशंकां अनेकेश्वरापातवारणाय एकत्वमितिपदेन निराकरोति। न

जीवब्रह्मणोरैक्यं ( अभेदं ) वक्ति किंच 'एकमेवाद्वितीयमितिश्रुत्या एकत्वंप्रतिपाद्यते, नेत्याह 'नवाकेवलत्वमिति केवलत्वं' एकत्वं तस्याविद्यकत्वादित्यादिवाक्येन अद्वैतिभिर्दूषितंचैकत्वं अतो नेदं मंत्रद्वयं अद्वैतिनामनुकूलं किन्तु भेदवादिनामेव। विशेषस्तु श्रुत्यर्थविचारे द्रष्टव्यः

किंचानेनवचनेनमायावादस्यनिंदनेपि ब्रह्मवादस्य किमायातं नह्यद्वैतवादिनोमायावादिनः किंतर्हिब्रह्मवादिनः मायावादिनस्तुबौद्धाएव' इतिशुक्लेनयदुक्तं तत् स्वपरग्रंथानवलोकनमूलत्वादुपेक्ष्यं तथाहि।

"अस्तुवानुपपत्तिरेव कार्यकारणयोर्मायात्मकत्वात् अनुपपत्तिर्हि मायामुपोद्बलयति अनुपपद्यमानार्थत्वानमायायाः इति ( भामती )

"मायायामनुपपत्तिरलंकारइति नमायावादेअत्यंतमुपपादनार्थं प्रयतितव्यमिति ( कल्पतरु ) तस्यचमायिकत्वेनमायायाश्चाघटितघटनापटीयस्त्वेनसर्वानुपपत्तेर्भूषणत्वात् ( अद्वैतसि )

इत्यादिस्वकीय ( अद्वैति ) ग्रंथेषु।

"तद्वरं अस्मान्मायावादात् महायानिकवादइति ( शास्त्रदीपिका )

"महायानिकबौद्धगाथितंमायावादंमायावादिनोऽव्यावर्णयंतो लोकान्मोहयंतिइति' 'अत्रकेचित् मायावादमवतारयंति' 'येतुबौद्धमतावलंबिनो मायावादिनस्तेपिअनेनसूत्रकारेणैवनिरस्तावेदितव्याः' ( भास्करभा ) इत्याद्यनेकेषुग्रंथेषु अद्वैतमतस्यमायावादत्वमुपवर्णितं

'मायाहितुच्छमभिधीयते नचाद्वैतिनः सर्वतुच्छत्ववादिनः ब्रह्मणः परमार्थसत्त्वांगीकारात् बौद्धाएवहि सर्वतुच्छत्ववादिनइति याशुक्लोक्तिः सापि स्वपरमताज्ञानमूलैव।

'मायाविद्ययोः ऐक्यप्रतिपादनात् मायाअज्ञानमेव

मायायाः अज्ञानान्यत्वेज्ञाननिवर्त्यत्वविरोधाच्चेत्याद्यद्वैतसिद्धि ब्रह्मानंदीयाद्यनेकग्रंथैः तुच्छ ( असत् ) विलक्षणाविद्यारूपत्वोक्तेः

अद्वैतिभिर्यथाब्रह्मणः पारमार्थिकसत्वंअंगीक्रियतेतथाशून्यवादि-

भिरपि शून्यस्य पारमार्थिकसत्त्वांगीकारात् 'शून्यवादिनामपि 'शून्यतायाः एव सत्यत्वात्' इति भामत्युक्तेश्च मायाविद्यापरपर्यायसंवृतेरंगीकाराच्च शून्यवाद्यद्वैतिनौ द्वावपि मायावादिनावेवेति ।

किं च

परेशजीवयोरैक्यं मया तु प्रतिपाद्यते ।
ब्रह्मणोस्य स्वयं रूपं निर्गुणं वक्ष्यते तथा ॥
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ।

इति रुद्रवाक्येन स्पष्टमद्वैत्यभिमतस्य जीवब्रह्मैक्यस्य ब्रह्मणः निर्गुणत्वस्य च निंदितत्वात् जीवब्रह्मैक्यमतमयुक्तं

न च जीवब्रह्मैक्यस्य ब्रह्मणः निर्गुणत्वस्य च श्रुतिसिद्धत्वेन तद्विरुद्धतया 'विरोधेत्वनपेक्षंस्या' दिति ( जै० १-३-३ ) न्यायेन पद्मपुराणस्योपेक्षणीयत्वमिति वाच्यं जीवब्रह्मैक्यनिर्गुणत्वप्रतिपादकश्रुतीनामभावेन प्रत्युत जीवब्रह्मणोर्भेदप्रतिपादकानां सगुणत्वप्रतिपादिकानां च श्रुतीनां विद्यमानत्वेन 'विरोधेत्वनपेक्षंस्यादिति न्यायस्यानवकाशेन पद्मपुराणस्य उपेक्षणीयत्वासंभवात्

यत्तूक्तं 'किं च इह न्यायसांख्यवैशेषिकवेदांतादीनां सर्वेषां निराकरणात् प्रतीयते यतदुर्ज्ञेयतया खिन्नस्य कस्यचिन्मंदमतेः प्रक्षिप्तिरियं प्रद्वेषोवाप्रजासुउत्सीदेयुरिमाः प्रजा' इतितदप्यसंगतमेव ।

ब्रह्ममीमांसाशास्त्रेऽपि न्यायसांख्यवैशेषिकादिमतानां निंदाकरणात्, दुर्ज्ञेयतया खिन्नस्य कस्यचिन्मंदमतेः प्रक्षिप्तिरियमिति वा द्वेषो वा प्रजासु इत्यपि वक्तुं शक्यत्वेन परमतनिरासकप्रमाणानामभावापत्तेः न चान्यमतनिरासकप्रमाणानामभाव इष्ट एवेति वाच्यं परस्परविरुद्धानामनेकेषां मताना मध्ये एकं प्रमाणं इतराण्यप्रमाणानि इतिसर्वैरभ्युपगंतव्यत्वेन दुष्टमतनिरासकप्रमाणानामावश्यकत्वात्

यत्पुनरत्रोक्तं विज्ञानभिक्षुर्भिक्षुरेवाद्याप्यवतिष्ठते इति तत्र पृच्छामः भिक्षुत्वं भूषणं मन्यते भवानाहोस्विद्दूषणमिति आद्ये किमपकृतं विज्ञानभिक्षोः द्वितीये कथमस्माद्दूषणान्मोचयसि स्वाचार्यान् अथ च ।

विद्यारण्यप्रणीतशंकरविजयीयशंकरशारदासंबादं मनसि निधाय भिक्षुत्वरूपत्वदभिमतकलंकं क्षालयितुमीहसे तदा श्लाघनीया ते प्रज्ञादूरादेव माननीयोऽसि इत्यलं । यत्तु हेतुदर्शनाच्चेति न्यायेन लोभमूलकस्मृतीनां उपेक्षितत्वस्येव द्वेषमूलकस्मृतीनामपि ( पद्म-पुराणस्य ) उपेक्षितत्वमेव न्याय्यमिति तदप्ययुक्तं पद्मपुराणस्य द्वेष-मूलकत्वे प्रमाणस्याकथनात् । विना प्रमाणं स्वाभिमतविरुद्धत्वमात्रेण द्वेषमूलकत्वे स्वाभिमतविरुद्धानां सर्वेषामपि द्वेषमूलकत्वस्य वक्तुं शक्यत्वेन स्वमतसाधनपरमतदूषणयोरसिद्ध्यापत्तेः

वस्तुतस्त्वेष मीमांसकसमयः यत् श्रुतिस्मृतीतिहासपुराण-सदाचाराणां धर्मप्रमापकत्वे उत्तरोत्तरस्य दौर्बल्यम् अतएव "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इत्यत्र पुराणस्याल्पाच्तरत्वेऽपि परनिपातः । इति

तत्तु तवप्रकृतानुपयुक्तं जीवेश्वरयोरभेदविषये श्रुतिसूत्रेतिहासानां अकथितत्वात् तादृशश्रुतिसूत्रेतिहासानामभावाच्च प्रत्युत तव विरुद्धं च. जीवेश्वरयोर्भेदविषये श्रुतिसूत्रेतिहासात्मकगीतारूप प्रस्थानत्रयस्य प्रदर्शितत्वेन ।

याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरारंभाः अपक्वमनसोऽशिवाः ॥
नैर्गुण्यमेव पश्यंति न गुणाननुयुंजते ।
तेषां तमःशरीराणां तम एव परायणं ॥

इति महाभारते स्पष्टं ब्रह्मनैर्गुण्यवादिनां तमः प्राप्तिवर्णनेन च ।

तद्विरुद्धतया त्वदुदाहृतपुराणानामेवोपेक्षणीयत्वप्राप्तेः तदनुसारित्वेनास्मदुदाहृतपुराणस्य स्वीकार्यत्वप्राप्तेश्च ।

यत्तु 'एतावता संभावये यद्भवंतो भवे हरौ च द्वेषं परिहृत्याद्वैतवादमेव समाश्रयिष्यंति' इति ।

तत्रेदं ब्रूमः सर्वप्रमाणविरुद्धं अप्रामाणिकमद्वैतवादं (जीवब्रह्मैक्यवादं) स्मर्यमाणमप्यधोगतिसाधनं अधमैरपि स्वीकर्तुमनर्हं कथमस्मासु संभावयसे ।

वयं तु भवे विष्णुभक्तोत्तमत्वपार्वतीपतित्वतामसजनमोहकत्वसात्विकजनतत्वोपदेशकत्वादिकं मन्वानास्तस्मिन् भक्तिमंतः तदुपदिष्टमार्गेण भवनियामके भवाराध्ये हरौ कल्याणगुणपूर्णत्वजगज्जन्मादिकर्तृत्वसर्वोत्तमत्वसकलप्रपंचभिन्नत्वनियामकत्वादिकं जानंतः तथोपासनयाऽपरोक्षज्ञानं संपाद्य भक्तिं कृत्वा भक्त्या प्रसन्नेनेश्वरेण निवृत्तावरणाः स्वरूपानंदानुभववंतो भवाम माभूदस्माकं नित्यदुःखानुभवकारणं जीवब्रह्मैक्यस्मरणमपि यथाहुः ।

सन्मानैः शतधा विखंडितमथो दूरे निरस्तं भृशं ।
हेयत्वाद्यदुपासनं च जगतामीशस्य निंदायते ॥
तन्मायिप्रियमैक्यमंत्यजमुखोच्छिष्टश्वमांसोपमं ।
स्वीकुर्यात्कतमोऽधमो यदुपरि ष्ठीवंत्यहो निष्ठुरा । इति ॥

जगज्जन्मादिकर्तृत्वसमस्तकल्याणगुणपूर्णत्वजीवजडलक्षणप्रपंचविलक्षणत्वसर्वोत्तमत्वस्वतंत्रत्वसर्वज्ञत्वादिमहामहिमवतःविष्णोः—

ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम् ॥

इत्यादिमहिमोपेतस्य चतुर्मुखस्य—

रक्षोगणक्षपणदक्षमहात्रिशूलं,
त्र्यक्षं वलक्षतनुमुल्लसदक्षमालं ।
रूक्षाघशिक्षणविचक्षणशक्तियूथं,
दक्षाध्वरक्षयदमाश्रय विश्वनाथं ॥

इत्यादिमहिमोपेतस्य शिवस्य च माहात्म्यं मिथ्येत्युतिरस्कुर्वंतो मायावादिनः ।

महामहिम्नामपि यश्चिकीर्षति,
स्वभावसंशुद्धतरं तिरो यशः ।
स नूनमाच्छादयितुं प्रवर्तते,
विवस्वतो हस्ततलेन मंडलम् ॥ इति

इमं श्लोकं स्मारयंति

आनन्दतीर्थमतमुज्झितदोषजात—
स्वानन्ददायि शिथिलीकृतमत्तमायि ।
सन्मानसंभृतमतिप्रियमच्युतस्य—
सन्मानसं सततमुज्ज्वलयच्चकास्ति ॥

# शुद्धाशुद्धिपत्रम् ।

| पृ० | पंक्ति | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | १० | बृ | बृ० |
| १ | १३ | त्वितिनुतव वाचस्त्रपतिनु | त्रपतइतिवाचस्तवतुनु |
| १ | १८ | वृंहितं | बृंहितं |
| २ | २४ | वादरा | बादरा |
| ३ | ५ | सतं | सततं |
| ३ | १५ | बुद्धि | बुद्ध |
| ४ | २ | आध्या | अध्या |
| ४ | १२ | शास्त्रा | शास्त्र |
| ५ | १३ | यद्य प्र | यद्ययं प्र |
| ५ | २० | प्रोक | प्रोक्त |
| ५ | २० | वाध | बाध |
| ५ | २१ | त्यत्स्या | त्यस्या |
| ७ | २३ | हस्तामलक माधव | हस्तामलक |
| ७ | २७ | ,, | माधवा |
| ८ | ५ | मास्य | मात्स्य |
| ८ | ५ | निंदतो | निंदंतो |
| ८ | ७ | ईश्च | ईश्व |
| ८ | २३ | पण | परा |
| ९ | ८ | कुम | कुमा |
| ९ | १८ | वौ | बौ |
| १० | ४ | सदे | संदे |
| १० | ९ | | (विद्यारण्य) |
| १० | १८ | ना | न्ना |
| ११ | १६ | प्राचीन | प्राचीना |
| १२ | ४ | त्यादिवाक्यैः | त्यादि- बौद्धवाक्यैः |
| १३ | ९ | ध्व | ध्य |
| १३ | १४ | वा | बा |
| १३ | २३ | सर्व | सर्वं |
| १६ | २१ | वौद्ध | बौद्ध |
| १८ | ५ | वाध्य | बाध्य |

| पृ० | पंक्ति | अशुद्धं | शुद्धं |
|---|---|---|---|
| १८ | १३ | बृत्ति | वृत्ति |
| १९ | २४ | वदि | वैदि |
| २४ | १३ | शक्याच्च | शक्यत्वाच्च |
| २४ | १९ | र्थ | र्थं |
| २४ | २१ | स्वप्प्र | स्वप्र |
| २४ | २४ | व्याप्यत्वभा | व्याप्यत्वाभा |
| २४ | २५ | त्वाभावाभि | त्वाभि |
| २६ | ७ | तिति | दिति |
| २७ | १० | तिति | मिति |
| २७ | ११ | व्वाव | व्याय |
| २८ | ३ | कुर्व | कुर्वं |
| २८ | २१ | विज्ञा | विज्ञाने |
| २९ | २५ | पादन | पादान |
| ३० | २२ | निर्ह | नार्ह |
| ३१ | २० | शतश इत्येव | ० |
| ३१ | २४ | ग्रंथैरेवा | ग्रन्थेष्वेवा |
| ३१ | २५ | तत्त्वसी | तत्वमसी |
| ३३ | ४ | परमात्मनाः | परमात्मना |
| ३३ | १० | विरुद्व | विरुद्ध |
| ३३ | १० | मशक्यत्वेन | मशक्यत्वेनच |
| ३६ | १४ | वाक्यं न | वाक्यंतावत्न् |
| ३६ | १६ | स्च २ | श्च २ |
| ३७ | १० | व्रह्म | ब्रह्म |
| ३७ | १४ | सर्वश्र | सर्वभ्र |
| ३७ | २० | त | तं |
| ३८ | १८ | बाध | बोध |
| ३९ | ८ | यतीतीदं | यदिदं |
| ४० | ८ | कथ्यते एवं | कथ्यतइत्येवं |
| ४२ | ७ | समयैव | समयस्यैव |
| ४२ | २० | यतूक्तं | यत्तूक्तं |
| ४३ | ५ | भाव्या | भव्या |
| ४३ | ८ | प्रवृतेन | प्रवृत्तेन |
| ४४ | १ | चार्वाकवत् वैभाषिकवत् | चार्वाकवैभाषिकादिवत् |

| पृ० | पंक्ति | अशुद्धं | शुद्धं |
|---|---|---|---|
| ४४ | २० | वैंद | वेंद |
| ४५ | ९ | चाधिक | चाधिकं |
| ४५ | १० | शव्द | शब्द |
| ४५ | २४ | इर्वी | ० |
| ४५ | २४ | द्रुह्म | द्व्रह्म |
| ४६ | १ | ककार | गकार |
| ,, | २ | ककार | गकार |
| , | ८ | प्रदशिता | प्रदर्शिता |
| ,, | ९ | चार्येति | चार्यइति |
| ,, | १५ | संतीय | सतीय |
| ,, | १६ | मत्य | मर्त्य |
| ,, | १८ | नी | ती |
| ,, | २४ | त | ति |
| ४८ | १० | पदंकथयतः | पदच्छेदे |
| ४८ | १७ | आंग्लभाषाविदां | ० |
| ४८ | १८ | तं टिलकं | तं आंग्लभाषाविदं टिलकं |
| ४८ | २४ | मित्याभि | मित्यभि |
| ४८ | २५ | वदतः वै | वदतस्तव वै |
| ४९ | १२ | कूषमं | कूपमं |
| ५० | १ | शबर भृ | शबरप्रभृ |
| ५० | ९ | स्चा | श्चा |
| ५१ | १६ | रूपंदं | रूपं |
| ५१ | १६ | वाद | वाद् |
| ५१ | १७ | वादशय | बादराय |
| ५२ | २३ | धर्भं | धर्मं |
| ५३ | ९ | थर्वदो | थर्ववेदो |
| ५४ | ७ | पुंडा | पुंड्रा |
| ५९ | १७ | शुभा | शुभाः |
| ६० | ३ | र्ण | र्व |
| ६१ | १४ | चच्चि | चयच्चि |
| ६१ | २१ | नामो | नमो |
| ६१ | २३ | कात | कास्त |
| ६१ | २३ | भ्यः | भ्य |

| पृ० | पंक्ति | अशुद्धं | शुद्धं |
|---|---|---|---|
| ६४ | १२ | रुद्र | रुद्रा |
| ६५ | १७ | ब्रह्मन | ब्रह्मन् |
| ६७ | ३ | - | बृहत्पाराशरसंहितायां पाद्मे ( उ० खं० ) |
| ७० | १८ | वन्त | वत |
| ७२ | ५ | चर्या | चार्या |
| ७२ | ७ | षया | षुः |
| ७२ | १९ | ण्यंभा | ण्यम |
| ७३ | ८ | वावोट | वाट |
| ७४ | १ | लिनां | लिभिः |
| ७४ | ५ | त्रिध | विधि |
| ७४ | ८ | मस्मै | भस्मै |
| ७४ | ११ | यां | या |
| ७४ | १५ | नं | न |
| ७४ | २० | रवा | खा |
| ७४ | २३ | द्धृ | ध्वृ |
| ७४ | २७ | णामंत्रा | त्राणां |
| ७५ | १० | नीय | नोय |
| ७५ | १० | नञ्च | नश्च |
| ७६ | ५ | वदन् | वदन्ती |
| ७६ | १० | श्लोकेषु…योगात् | कानां पुलस्त्यस्मृतौ अभावात् |
| ७६ | १७ | तौ | तयोः |
| ३ | १९ | नाद्वैत | नाद्वैता |
| ४ | १ | स्पः | स्य |
| ५ | ११ | व्यत्र | व्यात्र |
| ,, | ,, | पारम | पारमा |
| ,, | २० | तिषे | निषे |
| ,, | ,, | प्रनि | प्रति |
| ८ | २४ | विले | विल |
| ,, | ,, | र्क्तः | क्तेः |
| ९ | १३ | प्रतिपादका | प्रतिपादिका |
| ९ | १६ | वेदाता | वेदांता |
| ९ | १८ | सग | संग |
| १२ | ६ | थ्येत्यु | थ्येति |

| पृ० | पंक्ति | अशुद्धं | शुद्धं |
|---|---|---|---|
| ४ | १६ | आनन्द | आनन्दा |
| १३ | २ | संवृत्ती | संवृति |
| १६ | १५ | प्रमाण्य | प्रामाण्य |
| १७ | १३ | भेदापत्या | भेदापत्त्या |
| २४ | २० | वछिन्न | वच्छिन्न |
| २५ | ७ | ब्र | व्र |
| २६ | ६ | व्यहार | व्यवहार |
| २७ | ५ | तत्व | तत्त्व |
| ,, | ६ | तात्विक | तात्त्विक |
| ,, | ७ | ,, | ,, |
| २७ | ११ | व्याव | व्याव |
| ,, | १३ | सत्व | सत्त्व |
| ,, | , | असत्व | असत्त्व |
| २६ | ८ | यथातथ्य | याथातथ्य |
| ३२ | १२ | ईक्षतेना | इक्षतेर्ना |
| ३३ | ६ | प्रदर्शयित्वा | दर्शयित्वा |
| ३३ | ७ | सिद्धि | सिद्धिः |
| ३६ | ३ | या मा | यो मा |
| ४४ | १६ | विवेचयतु | विविनक्तु |
| ४६ | २४ | अलौकिव्युः | अलौकिकव्यु |
| १२ | २५ | शून्यताया अपि | शून्यताया एव |
| ७४ | ११ | तायां मुखा | तायामुखा |
| ७३ | १५ | स्थानं मुखा | स्थानमुखा |
| ६९ | १४ | च च्चिन्न | च यच्चिन्न |
| ६९ | २३ | क्तभ्यःनि | क्तभ्यनि |
| ४७ | २४ | त्याज्यैव | त्यज्यैव |
| ५३ | १७ | तथाऽसुरः | तथाऽऽसुरः |
| ५७ | १६ | गृहीष्यामि | ग्रहीष्यामि |
| ५६ | २ | पुराणानि | पुराणस्यनि |
| २ | १८ | प्रदर्शना | प्रदर्शनाय |
| ३ | १ | दशिता | दर्शिता |
| ४ | १४ | श्रा | श्र |
| ७ | ३ | इश्वर | ईश्वर |
| ७ | १५ | रेछु | रेच्छुः |
| ७ | १५ | पूर्वक | पूर्वकं |
| ८ | ६ | त्वानमा | त्वान्मा |
| ६ | २२ | मताना मध्ये | मतानांमध्ये |
| ११ | १६ | निष्ठुरा | निष्ठुराः |
| ६० | ३ | नानां प्रामा | नानामप्रामा |

---

द्वितीयसंस्करणे एताः अन्याश्च संभाविता अशुद्धीः परिवर्तयिष्यामः



